# BHASA KATHA SARA

VOL. I. PARTS I AND II

# भासकथासारः

(प्रथमद्वितीयौ भागौ।)



BY

Y. MAHALINGA SASTRI, B.A., B.L.
KUMBAKONAM

# A History of Vedic Literature

(IN SANSKRIT)

## ॥ वैदिकसाहित्यचरित्रम् ॥

**With a FOREWORD by**

**Mahamahopadhyaya Dr GANGANATH JHA,**
*Vice Chancellor, Allahabad University*

This is the first book of its kind in Sanskrit.

Ordinary Edition —Price Rs. 2 4 0
Library Edition — " " 3 12 0

## Prasna - Marga

With Explanatory Foot Notes

## ॥ प्रश्नमार्गः ॥—टिप्पण्या परिष्कृतः

This is an important and very rare work which is true to its name a foot-path to the Prasna & Jataka parts of Astrology and the best book of its kind that exists at present

Ordinary Edition —Price Rs 3 0 0
Library Edition — " " 4 0 0

**R Subrahmanya Vadhyar,**
*Bookseller & Publisher,*
**KALPATHI—PALGHAT**

# BHASA KATHA SARA

**Vol. I.—Parts I & II**

BEING A PROSE ABRIDGEMENT OF THE
TRIVANDRUM PLAYS ATTRIBUTED TO

BHASA

BY


. MAHALINGA SASTRI, B.A., B.L.,

*Son of Mahopadesaka, Sastra Ratnakara,*
YAGNASWAMI SASTRI AVL.,
*Advaita Sabha Pandit, Kumbhakonam*





PUBLISHED FOR THE AUTHOR

BY

R. SUBRAHMANYA VADHYAR,

*Bookseller & Publisher,*
KALPATHI—PALGHAT.
1928.

॥ श्रीरस्तु ॥

# ॥ भासकथासारः ॥

भागत्रयात्मके प्रथमद्वितीयौ भागौ ।

महाकवि श्रीभासप्रणीतनाटकानां कथासङ्ग्रहः ।



श्रीमद्भरद्वाजकुलतिलकश्रीमदप्पय्यदीक्षितवंशमुक्ताफलानां
महामहोपाध्याय राजुशास्त्र्याख्या विख्यातश्रीत्यागराज-
मखिराजानां प्रपौत्रेण महोपदेशक-शास्त्ररत्नाकरादि-
बिरुदाङ्कितपण्डितवरश्रीयज्ञेश्वरशर्मणामात्मजेन

**श्रीमहालिङ्गकविना**

विरचितः ।



पालक्काट्—कल्पात्ति
श्री गीर्वाणवाणीपुस्तकशालाधिपतिना
आर्. सुब्रह्मण्योपाध्यायेन
ग्रन्थकर्तुः कृते प्रकाशितः ।
१९२८.

## AUTHOR'S PREFACE.



THE dramas which I have attempted to retell in prose were brought to light a few years ago as a result of the researches of the late Mahamahopadhyaya T. Ganapathi Sastrial, Curator, Government Press, Trivandrum. Upon my first studying them I found them very entertaining and often admirable as examples of high dramatic art. These dramas portray the great lives of most of our popular heroes and heroines. The well-known personalities of Puranic and traditional fame appear in them with a vividness of individuality and an animation of life rarely met with in literature. My object in making these prose summaries is to afford young students of Sanskrit a fore-taste of the joy in store for them when they acquire equipment enough to be introduced to the originals directly.

The prose style of the author of these dramas is unaffected, idiomatic and concise. So charmingly appropriate are his diction and phrasing, that I have not hesitated to weave choice bits into my own narrative in many places. Here and there I have also introduced into the text some verses from the originals to break the monotony of prose.

These thirteen plays fall into three groups, viz (1) those which borrow their themes from the Bhagavatha and the Mahabharata and, in which therefore, Sri Krishna figures prominently, (2) those which deal with the story of the Ramayana and (3) those which are based upon tradition and folk-lore I have recognised this natural division and have commenced the respective parts with separate benedictory verses And in order to place this work more easily within the reach of readers, I have published it in two separate volumes, the Purva Ardha comprising parts I and II and the Uttara Ardha, the third part

I have also added a glossary at the end

It is still a matter of controversy whether these dramas are the genuine works of Bhasa The fragmentary nature of many of these plays, the coexistence in them of high dramatic excellence and fine poetry with irregularities in construction and uncouth incorrectness of style, the presence in some of them of large gaps which render the trend of the plot itself not altogether clear, and the fact that the "Charudatta' is suspiciously like a shorter recension of the 'Mrichchakatika' of Sudraka, are some of the factors that complicate the question of authorship These plays have come down to us through the medium of the actor-communities of the West Coast and possibly are only mutilated versions of some ancient originals

adapted for stage purposes Among such originals, it may perhaps be hazarded, was the genuine Swapna Vasavadatta of the great Bhasa How many others of Bhasa's plays may have been in the same way utilised it is impossible to say.

But, whatever be the solution of the problem of the authorship of these dramas, it is agreed in learned circles that their discovery has made a rich addition to the classic Sanskrit literature I have deemed it enough for my purpose to adopt the current belief regarding their authorship and have given my version the name of Bhasa Kathasara

The late Mahamahopadhyaya T. Ganapathi Sastrial of Trivandrum to whom I submitted specimens of the work in manuscript was kind enough to give me, in an appreciatory note, permission to publish it It is a great sorrow to me that he has not lived to extend his warm sympathy to it on its publication

I shall regard myself as amply rewarded for this labour of love if my Bhasa Kathasara succeeds in instilling into students a genuine interest in the study of the original plays themselves

MYLAPORE,
20-3-28

Y MAHALINGA SASTRI.

## ॥ निवेदना ॥

निर्व्याजेन निरञ्जनेन मनसा
स्वप्रत्ययं मानयन्

धीरो यः प्रणयी गुणेषु वहति
स्वच्छन्दमुच्चैश्शिरः ।

तस्यास्वादविदः प्रसादसुधया
नीरन्ध्रमाप्यायितं

कर्मेदं परिचीयमानसुषम
ख्यातिं परां विन्दतु ॥

## CONTENTS for Vol. I.

## पूर्वार्धे कथानुक्रमः ॥

### प्रथमो भाग ।



### द्वितीयो भाग ।

॥ श्रीरस्तु ॥

# भासकथासारः ॥

प्रथमो भागः ।

## ॥ बालचरितम् ॥

आपादितप्रलयमुत्तरगाम्बयोधा
धिन्वन्तु म कविघचम्पुभगा मुरारेः ।
नाभिह्रदोद्भवदुदारविरिञ्चिमन्य
पद्मोदरप्रथमसौरभवीचयो नः ॥ १ ॥

तमालदलमेचकस्तरणिनन्दिनीमेदुर
स्स्मरालसनितम्बिनीचलचलोचनानन्दनः ।
भुवोभरणविभ्रम कथदलीक गोपार्भक
स्स कोऽपि मुरलीकलक्वणितमोहनः पातु वः ॥ २ ॥

आसीदखिलभुवनमण्डलमण्डनायमाना शूरसेनेष्वखण्ड-
श्रीनिधानं मधुराभिधाना राजधानी । सा किल चतुरसागरतमेन
राज्ञा प्रजानुरञ्जनव्यग्रेणोग्रसेनेन परिपालिता परां समृद्धिमुवाह ।

तस्य च कंसो नाम नृशंसस्तनय आसीत् । अथैष यौवनारम्भे वर्तमानः पापात्मा पितरं परिणतवयसं सिंहासनात् प्रच्याव्य, प्रक्षिप्य च बन्धने, स्वयमग्रहीत् राज्यधुरां, अपीडयच्च प्रजाः, अद्रुह्यदात्मसंबन्धिभ्यो वृष्णिकुलप्रसूतेभ्योऽपि, अभ्यवर्तत नयविहीने हीने मार्गे, अभवच्च साधुभीषणो दुर्जनोपसेवितो, यस्य नाम्नि श्रुतेऽपि जना उद्विजन्ते स्म ॥

स कदाचित् कृतापराधो मधूकमहर्षिणा "स्वसुर्वसुदेवदयितायाः देवक्याः गर्भात् मृत्युमवाप्स्यसि" इति शप्तस्तौ दम्पती कारायां निगडयित्वा, प्रसूतमात्राणि च तयोरपत्यान्याच्छिद्य स्वयमवधीत् । एवम् औग्रसेनिना क्रूरकर्मणा हतेषु षट्सु बालकेषु देवक्याः लोकानामभयप्रदानार्थं देवरूपिण्यास्तस्याः सुतविडम्बनया साक्षादेव रथाङ्गपाणिराविरासीत् । तस्मिन्नवसरे पुष्पमयी वृष्टिर्दिवः पपात, विनेदुर्देवतूर्याणि, ननृतुरप्सरसः, प्रसेदुस्साधुमनांसि, मम्लावसुरश्री, दुरात्मनः कंसस्य दुरुदर्कसूचनानि निमित्तानि च सम्बभूवुः—तथाहि, उद्भ्रान्तविद्युदुद्दाममार्गान्तरम्, अतिरभसोच्छलितचण्डवातानुविद्धजलधरपटलनिर्घोषैः पतितहर्म्यशिखरा चकम्पे मेदिनी । अथ तैस्तैर्निमित्तैरानकदुन्दुभिर्नीतस्य रोहिणीरमणसुषमातिशयमनोहरस्य बालकस्य महाप्रभावतामनुमिमानः, स्वस्मिन्नुत्प्रेक्षमाणश्च देवानुकूल्यम्, "सप्तमोऽयं मम दीर्घायुर्मा यासीत् कंसेन मृत्युम्" इति निश्चित्य, कथमपि समाश्वासिताया प्रणयिन्या अङ्कादादाय स दरीगिरि-

प्रतिमगरिमाणं निरुपमानं तमात्मजन्मानम्, अर्धरात्र एव प्रसुप्तजनात् सत्वरं नगरान्निरगात् ॥

गच्छंश्च ज्योत्स्नोपरोधिनि तस्मिन् दुर्दिनान्धकारे, कुमारेणोपदर्शितया प्रभया कृतोपकारो, मध्येमार्गमापतितां कालिन्दीं स्वयमात्मानं द्विधा विभज्य दर्शिततलामयत्नेन संततार बालानुभावविस्मितस्सस्मितो वसुदेवः । उत्तीर्णश्च परितो विलोकयन् एषः नन्दगोकुलोपकण्ठस्थमात्मानं अन्वबुध्यत ॥

तत्र च "प्रभाते द्रक्ष्यामि कार्यसिद्धये प्रजाधिनाथं आत्मनो मित्रं नन्दगोपम्" इति चिन्तयन् यावदसौ कस्यचित् न्यग्रोधवरोर्मूलमाश्रयति विश्रमाय, तावदनेनानुस्मृतस्स एव नन्दगोपो हस्ताभ्यां कांचित् मृतदारिकामालम्ब्य रुदन् तत्प्रदेशमुपासदत् । स च समाहूय वसुदेवेन दारिकावृत्तान्तं पृष्टः, "अद्यार्धरात्रे अस्माकं कुटुम्बिन्या प्रसूतेयं दारिका सद्यः प्राणैः व्ययुज्यत । यशोदा च तपस्विनी क्लेशमोहिता नाद्यापि जानाति दारिका वा दारको वा जात इति । अहमपि घोषे श्वो निर्वर्तयिष्यमाणस्येन्द्रयज्ञस्य नाम गोपोत्सवस्यानया वार्तया विघ्नमनिच्छन् रहसि स्वयमेवैनामादाय निर्गतः" इत्युक्त्वा काष्ठभूतमपि तं कलेवरं वत्सलत्वात् त्यक्तुमशक्नुवन् परं रुरोद ॥

तमाश्वासयन् वसुदेवः, "सखे मा शुचः। गृह्यतां तत्प्रतिरूपकस्सप्तमोऽयं दीर्घायुर्मम पुत्रः । नास्ति मम पुत्रेषु भाग्यं,

यस्य किल षट्सूनवः कंसेन दुरात्मना निधनमुपनीताः । अस्मिन् कुरु निरन्तरं प्रेम । दग्धभूयिष्ठशेषं यादवानां बीजं एतद्यत्नेन परिरक्ष्यताम्" इत्युक्त्वा अंशुकनिगूहितं राजीवलोचनं बालकं तस्मै स्वयमुपानयत् ॥

मृतदारिकाग्रहणादशुचिमात्मानं मन्वानो नन्दगोपो यदा घोषोचितमाचारमनुरुध्य पांसुना शौचं व्यधित्सत, तदा बालकप्रभावेन धरणीं भित्त्वा युगप्रमाणा सलिलधारोत्थिता । तया च कृतशौचविधिः प्रमोदमेदुरस्सादरं स नयनानन्दनं तमादित्सत नन्दनम् । किं तु यस्समभिद्रवन्तमपि विदारयितुं, वृषभं शृङ्गे गृहीत्वा मोचयति, पङ्क्तिमग्नान् भाण्डशकटान् लीलयैवाघट्टयति, तस्यापि नन्दगोपस्य स बालो मन्दरगिरिसमानेन गरिम्णा दुर्वहोऽभवत् ॥

विस्मयमाने च तस्मिन्, भगवतो नारायणस्य दानवोपमर्देषु अमोघवीर्याण्यसाधारणलाञ्छनानि पञ्चायुधानि, वरवाहनं गरुडश्च, मनुष्यलोकमवतीर्णं बालकरूपं तमनुचरितुं गोपालकच्छद्मना घोष एवावतरिष्यन्तस्समुपतस्थिरे । तेषु चक्रायुधस्सुदर्शनो नाम भगवन्तमभिवन्द्य कार्यगौरवमपेक्षमाणो, "जनस्यास्य लघुत्वयोगात् प्रसादं कर्तुमर्हति देवः" इति प्रार्थयामास । ततो नन्दगोपेऽपि, "राजदारक! नमस्ते, नमस्ते; गोपजनस्य त्वां महीतुं को वल्पराक्रमः" इति दैन्यमालम्बमाने, स बालकस्तदस्तस्य हस्ततुलनीयोऽभवत् ॥

अथ समादाय बालकं प्रभातायां रजन्यां नन्दगोपो वसुदेवमापृच्छ्य कृतकृत्यमात्मानं मन्वानः प्रतिन्यवर्तत । निर्गते च तस्मिन्, मथुराभिमुखं प्रस्थास्यन् वसुदेवः प्रत्यागतप्राणां रुदन्तीं नन्दगोपविसृष्टां दारिकामालम्ब्य, गृहीत्वा च, पूर्ववत् दत्तावकाशां यमुनामुत्तीर्य देवकीसदनं प्राविशत् ॥

श्रीनाथावतरणमहितायामस्यां रजन्यां औग्रसेनेः चिरेणापि दूरीबभूव निद्रा । चिन्ताग्रस्तचेतसस्स्फुरन्ति स्म तस्य पुरतः मूर्तानीवात्मनो दुरितानि काश्चन चण्डालकन्यकाः, "अस्माकं कन्यकानां त्वया सह विवाहो भवतु" इत्यभीक्ष्णमश्लीलमाचक्षाणाः; याश्च निर्भर्त्सयति तस्मिन् सहसा अन्तरधीयन्त । ततश्चेतस्समाधातुं अभ्यन्तरं प्रविविक्षुममुं निवारयन्नाविरभूदञ्जनराशिसवर्णो भीमोमदंष्ट्रवदनः पिङ्गलाक्ष उल्कां प्रगृह्य साक्षादेव मधूकशापः । स च "हृदयं तव प्रवेक्ष्यामि" इत्यभिधाय सहसा प्रणष्टः । इत्थंभूतैः प्रतिभासैः व्याकुलितमनाः कंसो नयनविश्रममिच्छन् शय्यामुपगम्य क्षणान्निद्रावशो बभूव । तदा लब्धान्तरस्स शापो विष्णोराज्ञेति प्रतिपाद्य राज्यश्रियं कंसशरीरान्निर्वास्य, ज्येष्ठाकालरात्रि-महानिद्राप्रभृतिभिः दुर्देवताभिः परिवृतः "प्राप्नोमि मुनिशापस्त्वामचिरान्नाशमेष्यसि" इति वदन् समाविशत् । अथोषसि प्रबुध्यन् कंसः पुनः पुनरसंभवद्भिः भूकम्पोल्कापातवातोद्भ्रमणादिभिः किमपि अत्याहितमाशङ्कमानः कार्तान्तिकैस्संमन्त्रयामास ॥

तैश्च—

भूत नभस्थलनिवासि नरेन्द्र नित्य
कार्यान्तरेण नरलोकमिह प्रपन्नम् ।
आकाशदुन्दुभिरवैस्समहीप्रकम्पै-
स्तस्यैव जन्मनि विशेषकरो विकार ॥

इति विज्ञापितो "ज्ञायता या काप्यद्य प्रसूतवती वा" इति कञ्चुकिनम् आज्ञापयामास । विदित्वाऽऽगतस्स न्यवेदयत्, "देव देवकी खलु प्रसूतवती" इति । श्रुत्वैव पापहृदय कसा मधूकशापत्रस्तमना, "बालिकेति कृपास्पदमिदमपत्य जीवतु भवत्प्रसादेन" इति बहुधा कृतप्रार्थनौ देवकीवसुदेवावनादृत्य, धात्र्या हस्तेन दारिकामानाय्य, सरोषमाच्छिद्य, "एष विफलो मे मधूकशाप" इति भूमावविद्ध्यत् ॥

तत्क्षण एव स तोक वज्रतशूलमुग्रदर्शन कात्यायनीरूप माबभार । तामावृत्य कुण्डोदरशूलनीलमनोजवाद्यस्तस्या पार्षदा समुदतिष्ठन् । तत्र च देवी, "कसक्षयार्थमेव प्रसूताह वसुदेवकुले । सपरिवारा च गोपालवेषप्रच्छन्ना घोषमवतरिष्यामि भगवतो दामोदरस्य बाललीलाविभूतिमनुभवितुम्" इत्युदीर्य सद्यस्सानुगा तिरोबभूव । अथ भयविस्मयाकुलहृदय कसो दुर्निमित्तानामेषा विपुल शान्तिकर्म विधातु मनो दधे ॥

दामोदरप्रवेशेन नन्दगोकुले प्रतिक्षणमुल्लास समृद्धिरदृष्टपूर्वा। बहुलीभूतामिमा नन्दसूनुप्रशस्तिमाकर्ण्य, कात्यायनीवचासि च

स्मरन्, कंसस्य शिक्षणार्थं अवतीर्णममुं देवताविशेषमाशङ्क्य, तं यान्य एव घातयितुं राक्षसान् न्ययूयुजन्। तत्र प्रथमा-पूतना नाम राक्षसी दामोदरं नन्दगोपवधूवेषेण विषदिग्धस्तनं पाययन्ती पयसीव प्राणेष्वपि तेन चूषिता ममार। मासजात एषः शकटा-सुरमाततायिनं पादाघातेन चूर्णयामास। अथ कतिपयमास-जन्मजातचङ्क्रमणशक्तिर्नन्दकिशोरस्तत्र इतस्ततश्चरन् अज्ञातप्रवेशाप-क्रमणो गोपगृहेषु दधिक्षीरनवनीतादीनि गव्यानि प्रतिदिन-मचूचुरत्; स्वैरं निजकेलिसब्रह्मचारिभ्यस्समभिभ्यश्च विभाजयां-चक्रे। अस्य च दुर्नयं गोपाङ्गनाः यशोदायै न्यवेदयन्। तदाप्रियेण नन्दगोपी निरूपितागसं सुतमुलूखले रज्ज्वा बबन्ध। महाप्रभावो बालकृष्णस्तेनैवोलूखलेन प्रचलितस्स्वमभितोऽरोद्धुं उप-स्थितौ वृक्षरूपिणौ यमलार्जुनौ नाम दानवावाघट्ट्य निपातयां-बभूव। तदादिनश्च गोपजनास्तं दामोदरनामानमाचख्युः। ततः क्रमेण, सङ्कर्षणं प्रमथ्यापहर्तुकामः प्रलम्बः, क्वचित् ताडीवनक्रीडा-मग्नं नन्दकुमारं जिघांसन् गर्दभवेषभीषणो धेनुकः, कदाचित् तुरगरूपेणाभिपतन् कृष्णं हिंसितुकामः केशी चेति त्रयः, कंस-प्रियचिकीर्षवो दानवमुख्याः स्वस्वमार्थं सङ्कर्षणेन कंसारातिना च व्यगृह्य यानां मरणिमनुप्रापिता. ॥

अथ कदाचित् यायमानेषु आतपेषु, प्रफुल्लकमलवदनाभिः गम्भीरगीर्भिः वन्यकुसुमापल्लवमनोहराभिः, आलापमधुराभि-र्गोपकन्याभिर्दीर्घिकमनुप्रयन्तं, अनुरागपेशलहृदयं दामोदरमभि-

युयोजारिष्ट॰ नाम वृषभरूपी कोऽपि दानवः। स च, खुरपुटाघातैर्भूमितलं विदलयन्, शृङ्गाहतिभिर्नदीकूलान्यवकिरन्, समुद्धतेनाक्रमणेन कम्पयन्निव मेदिनीं, घोरेण हुङ्काररवेण निपातयन्निव गगनतलं, भयार्तैः प्रपलायितैः गोपजनैस्सोद्वेगमीक्ष्यमाणः, कृष्णमुपागम्य, भीषणैर्निजाटोपैरपि न भीतं, नापि विस्मितं, तं विलोक्य, "सारवान् खलु अयं बालः" इति चिन्तयन्, सावहेलमित्थमुदाजहार—"भो, बालस्त्वं अतः खलु भयं न जानासि" इति। तमवधीरयन् आह दामोदरः, "भो गोवृषाधम, किं बाल इति मां प्रधर्षयसि? बालेन कृष्णसर्पेण दष्टः किन्न म्रियते? किन्न बालस्सः पुरा यः क्रौञ्चं विदारयामास? अपि च, रे मूर्ख, किं पल्लवमात्रेण वज्रेण न निपात्यते कठिनोपलसञ्चयो महान् शैलः? एवं यदि मम भुजदण्डनिपीडितं त्वां भूमौ निपात्य न निष्पेषयिष्यामि, नास्मि दामोदरः" इति॥

अथ प्रवृत्ते तयोर्महति युद्धे, स वृषभः पादेनैकेन अवस्थितं तं बालकं स्थानात् चालयितुमपि अशक्नुवन् मूर्च्छितः पपात। समाश्वस्य पुनरचिन्तयत्—"अहो दुष्प्रसहोऽयं बालः। किन्नु रुद्रोऽयं भवेत् उत शक्रः। तर्कयामि नूनमेष स एव पुरुषोत्तमो, यः त्रिलोकरक्षणाय यत्र यत्र वयं जाताः तत्र तत्रास्मानुत्सादयितुं स्वयमाविर्भवति। हतस्यापि अनेन मम अक्षयो लोको भविष्यति" इति। समर्थ्य चेत्थं युद्धार्थं भूयः कृतसम्भ्रमो गर्जन् एष दुरात्मा, दामोदरेण शृङ्गयोरादाय दूरोत्क्षेपणलील्या

निपातितो, वज्राहत इवाञ्जनगिरिर्विशीर्यन्, नासाऽऽस्यनेत्रविवरेभ्यो वमन् रुधिरधारां पञ्चत्वमवाप ॥

तदात्वे ससम्भ्रममापतन्तीभिर्गोपदारिकाभिः, "अहो अत्याहितम्! सङ्कर्षणः खलु यमुनाह्रदनिवासिनमुद्वान्तगरलभीषणं दुष्टसर्पं कालीयं नियन्तुमभिपतति। तन्निवार्यतां साहसादयं अविलम्बेन" इति प्रार्थितो नन्दसूनुः, "पश्यन्तु पश्यन्तु भवन्तः। अहमेव तद्दर्पशमनं करोमि" इति सत्वरं परिक्रम्य हेलया कालिन्दीसलिलम् अगाधमवीविशत् ॥

अथावलोकयत्सु तीरमाश्राय विस्मयातङ्कमन्थरेषु गोपालकेषु, कतिपयैरेव निमेषैरप्रमेयप्रभावस्सनालो महाभोगं वासुकिप्रतिमं तं नागराजं निष्क्रमय्य, पश्यत्स्वपि तस्य शिरस्सु पर्यायनिपतच्चरणकमलः प्रारभत नृत्तलीलामनुभवितुम्। पराभिमर्शासहनरसः रोषाविष्टः कालीयः भीषणं श्वसन्नुद्ववाम वहन्निव त्रिलोकीं करालां विषानलज्वालाम्। परं तु, महतापि प्रयासेन शिरःपदाधिरूढं बालकं दग्धुमथवोत्त्रासयितुमप्यशक्नुवन्, विफलश्रमस्तमजय्यं साक्षादेव नारायणमाकलय्य, अवनतशिराः स भोगी स्तुतिभिः क्षमापयितुमारेभे। व्यादिदेशात्मानं गरुडभयात् यमुनाह्रदप्रविष्टं भगवन्तमभयं ययाचे। तस्मै प्रसन्नो दामोदरो गरुडभयनिवारणीं तन्मूर्धसु निजपदमुद्रां दत्वा, "संहृत्यात्मनो विषं ह्रदादस्मान्निस्सर" इत्याज्ञाप्य च, विस्मयमूकं निजोत्सुकं गोपालमण्डलमुपासदत् ॥

एवं यमुनाजलं पानस्नानार्हमाकलय्य, तद्ध्रदोपान्तादुपाहृतैः कालीयभयादनपचितपूर्वैः पुष्पसञ्चयैरनुरञ्जिताभिर्गोपकन्याभिः परिवृतः तिष्ठन् दामोदरः, तत्क्षणादागतेन कंसभटेन "मधुरायां निर्वर्तयिष्यमाणधनुर्यागमुद्दिश्य, ससङ्कर्षणस्य भवतस्सान्निध्य-मिच्छति सद्य एव महाराजः" इति विज्ञापितो, निजबन्धुमित्रादी-नामन्त्र्य साग्रजः कतिपयैर्गोपदारकैरनुगम्यमानो मधुरापुरी-मभिप्रतस्थे ॥

अथ प्रविशन्नेव कंसराजधानीं माधवो मार्गसङ्गतेभ्यो राजकुलरजकेभ्यो वस्त्राण्याच्छिद्य जग्राहेति समभिघातयितुं महा-मात्रेणोत्पलापीडो नाम गन्धहस्ती सचोदितः । तमापतन्तमद्रि-संनिभं गजेन्द्रं हस्तोत्पाटिततदीयविषाणेनैव प्रहरन्नवधीत् नन्द-सूनुः । ततो निरन्तरोत्सवव्यतिकरावसक्तमाल्यदामशोभितसुधा-पितागरुधूमाधिवासितावकाशं, राजमहापथमवगाढः, कन्दर्प-सुन्दरस्स पुरसुन्दरीणां नयनोत्सवमादधानः कृष्णो मदनिका नाम्न्या कुब्जिकया राज्ञो गन्धवाहिन्या, बहुमानेन दत्तैः गन्ध-विशेषैस्स्वगात्रमनुलिप्य, तामपि हस्तावमर्शेन विगतकुब्जभावा-मकार्षीत् । प्रविशंश्च, मालाकारापणास्तेभ्यः पुष्पाण्याहृत्याऽऽत्मानं मण्डयामास । तदनु, सुरक्षितामपि कंसस्य यज्ञशालां बलाद्वा स्थ-निग्रहेणाक्रम्य, तत्र पूजार्थं स्थापितं धनुरादाय लीलयैवाभञ्जयत् ॥

एतानि कृष्णचरितानि वीरचरितानि निशम्य प्रबलोद्विग्न-मानसः कंसश्चाणूरमुष्टिकौ मल्लवरौ मल्लयुद्धप्रसङ्गेन कृष्णरामौ

घातयितुं न्ययोजयत्। अथाप्रतिमल्लौ सङ्कर्षणदामोदरौ, तौ मल्लौ निष्पिपेषतुः। क्षणादेव दामोदरस्समुत्पत्य, प्रासादशिखरान्नियुद्धमवलोकयन्तं, स्वजनयित्रोर्बन्धनक्षेपक्रूरकर्माणं, निजाग्रजन्मवधमहापातकिनं, स्वस्मिन्नप्याततायिनं, प्रजापीडनं नृशंसचरितं, कंसं, सरोषं, शिरोरुहेषु प्रगृह्य भूमावपातयत्। अभिघातक्षतशरीरस्सद्यः पञ्चत्वमाप कंसः॥

अथ हा हेति कृतस्वने तुमुलीभूते जनपदे, कंसहन्तारमभियोद्धुं संरभमाणे सेनासमूहे, सरभसमाविर्भूय वसुदेवः, "ममात्मजन्मानाविमौ विष्णोरंशभूतौ कंसवधार्थमवतीर्णौ सङ्कर्षणवासुदेवौ किन्न वेत्थ" इत्युद्घुष्य प्रशान्ततामनयत् मण्डलानि। तदा कंसनिषूदनेन प्रहृष्टाः पातितकुसुमवृष्टयो देवाः नारदं पुरस्कृत्य भगवन्तं दामोदरं अभिनन्दयामासुः। स तु कंसविजयी, कारागृहात् उग्रसेनं विमुच्याभिषिच्य च महाराजपदे, तत्साहाय्येन वर्तमानो भुवनमङ्गलमाचरन् मधुरायां बन्धुमण्डलाभिनन्दितस्सुखमुवास॥

# ॥ मध्यम व्यायोगः ॥

द्यूतापहारितराज्येषु अरण्यमधिवसत्सु पाण्डवेषु कदाचित् धौम्यमहर्षेश्शतकुम्भं नाम यज्ञमनुभवितुं प्रस्थितैः भ्रातृभिः आश्रमरक्षानियोगेन भीमसेनस्स्थापितः । स च व्यायामपरिचयार्थं विप्रकृष्टदेशमनुदिनं गच्छति । एवमाचारं तमधिगत्यान्यस्मिन् अरण्यभागे वास्तव्या तत्परिगृहीतपूर्वा हिडिम्बा नाम राक्षसी "विविक्त एष क्षणो लब्धः; पुनरपि प्राणेश्वरं दिदृक्षे । स च जानातु महाबलपराक्रमेणात्मनस्सुतेन वर्धमानं पाण्डवपक्षम्" इति विचिन्त्य, पुत्रं भैमसेनिमाहूयादिदेश । "ममोपवासनिसर्गार्थमस्मिन् वनप्रदेशे कश्चित् मानुषः परिमृग्यानेतव्य" इति । अत्र च तस्याः अभिसन्धिः, यत्किल निर्मानुषे तस्मिन् विपिने कथित भीमसेनमेवासावासाद्य बलादानयेत् । तदा च भीमो बलमस्य विजानीयादिति ॥

घटोत्कचस्तु मातुरनवगतयथार्थाभिप्रायः मानुषमन्विष्यन् वनोदराणि बभ्राम । भ्रमंश्चाससाद यदृच्छया, पाण्डवाश्रमस्य नेदीयसा वर्त्मना गच्छन्तं स्वमातुलेयस्योपनयनं अनुभवितुं सपुत्रदारमभिप्रस्थितं केशवदासं नाम वृद्धब्राह्मणम् । अथ जनन्याः पारणानिर्वहणमनेन विप्रकुटुम्बकेन संपादयिष्यन् स तमभिदुद्राव ॥

बभ्रुकेशं, मधुनिभनयनं, स्फुरदुद्धृतदंष्ट्रं, जलदानीलं, महाकायं भीमदर्शनं, तमनुपतन्तं वीक्ष्याशरणः सपुत्रदारः केशवदासः तत्रास । भयार्तमगतिकं तं शोचनीयावस्थं ब्राह्मणकुटुम्बकं उपासीदन् विमृश्य जातानुकम्पो घटोत्कचः केशवदासमाहूय समयमित्थमाचचक्षे—"पुत्रमेकमुत्सृजन् द्विपुत्रः पत्न्या सह मोचयिष्यसे । अन्यथा सकुटुम्बः क्षणेनैव विनाशम् उपयास्यसि" इति ॥

वृद्धः प्राह—"जर्जरमिदं कृतकृत्यमात्मनश्शरीरं सुतापेक्षी राक्षसाग्नौ होष्यामि" इति । तन्निवारयन्ती ब्राह्मणी, "गृहीतफलेनैतेन शरीरेणार्य कुलं च रक्षितुमिच्छामि" इति राक्षसाय आत्मानमुपानिनीषत् । "स्त्रीजनो वा वृद्धो वा ममाम्नायानभिमत" इति तौ निराकुर्वति घटोत्कचे, त्रयोऽपि विप्रसूनवः गुरुरक्षणश्रद्धया स्वं स्वमात्मानं तस्मै उपाहरन् । तदा "ज्येष्ठमिष्टतमं न शक्नोमि परित्यक्तुम्" इति वृद्धः प्रथमं पुत्रं निववार । ब्राह्मणी च कनिष्ठे दर्शितादरा तस्यानपायमैच्छत् ॥

उभाभ्यामपि परित्यक्तो मध्यमः पितरावभिवाद्य आमन्त्र्य च राक्षसमुपासदत् । एवं प्राणपरित्यागकृतव्यवसायस्स विप्रकुमारः, "प्रकल्पितपरलोकस्यात्मनः पिपासाप्रतीकारं कृत्वाऽऽगच्छामि" इति घटोत्कचमापृच्छ्य जलाशयमन्विष्यन् ययौ । निष्क्रान्ते च तस्मिन् केशवदासः, मृत्युमुखे उपायनीकृतं पुत्रकं स्मारं स्मारं भृशमन्वतप्यत । तदा च "चिरायते खलु विप्रवटुः ।

अतिक्रामति मातुराहारकाल:" इति कृतत्वरो घटोत्कच: "भो भो! मध्यम, मध्यम! शीघ्रमागच्छ" इति शब्दापयामास ॥

अत्रान्तरे व्यायामव्यग्रो वनान्तप्रतिनादितं तं महास्वनं निशम्य पाण्डवमध्यम:, "को नु खलु मामत्र शब्दापयति" इति साशङ्कं तत्प्रदेशमुपासदत् । निभल्य च प्रवीरदर्शनं पुनस्तथैव शब्दापयन्तं घटोत्कचं, सोऽभ्यधात् "भो: प्राप्तोऽस्मि कस्मादाहूयते" इति । "मध्यमं शब्दापयति मयि कस्त्वं प्राप्त" इत्याचिक्षेप हैडिम्बेय: । स प्रत्यवादीत्—"अत: खलु अहं प्राप्त: न मत्त: परो मध्यम:" । शृणु तावत्—

"मध्यमोऽहमवध्यानामुत्सिक्तानां च मध्यम: ।
मध्यमोऽहं क्षितेर्भद्र भ्रातॄणामपि मध्यम: ॥
मध्यम: पञ्चभूतानां पार्थिवानां च मध्यम: ।
भवे च मध्यमो लोके सर्वकार्येषु मध्यम: ॥" इति ।

एवं विवदमानयोरनयोर्विप्रस्तुतो न्यवर्तत । तन्निशाम्य "मध्यम, इत इत" इत्युपाह्वयति राक्षसे, वृद्धब्राह्मण: प्राप्तं महापुरुषं, विदितपाण्डवाश्रमवृत्तान्तत्वाद्भीमसेनमेव निश्चित्य "परित्रायस्व ब्राह्मणकुलम्" इति तं शरणयांबभूव । भीमो विप्रायाभयं दत्वा मुच्यतां तपस्वी सकुटुम्बोऽयं द्विज इति घटोत्कचमादिशत् । "मातुर्मम हिडिम्बाया: आज्ञया गृहीतोऽयं मत्पिता वृकोदरश्चेत् स्वयमर्थयते तदापि न मुच्यते किमुत त्वदर्थे" इति प्रतिवदन्तं हैडिम्बेयं यदृच्छयोपन्यस्तपुत्रभावं मनसाभिनन्दन् स पुनरपि

अगदन्, तत्सारं तुलयितुकामो मध्यमपाण्डवः "क्षत्रियोऽहं मच्छरीरेण ब्राह्मणशरीरं विनिमयितुमिच्छामि । त्यज्यतां विप्रकुमारः । अहं त्वामनुसरामि । अथवा यदि ते शक्तिरस्ति बलात्कारेण मां नय" इति । तथेति प्रतिपद्यमाने घटोत्कचे भीमः, "कस्ते पिता ? किमसौ शक्र उत शक्तिधरः ?" इति सन् पितरमधिक्षिपन् व्याजेन तं प्रकोपयामास । क्रुद्धश्च घटोत्कचः प्रोत्पातैः महीरुहैः उत्पाटितैश्च शैलकूटैः तमविध्यन् । चिरेणापि विफलश्रमः तेन सह नियुद्धमकरोत् । कथञ्चिदपि नाशकत्तं हन्तुम् । ततो मातृप्रसादलब्धेन मायापाशेन तं ववन्ध । भीमसेनो मन्त्रं जप्त्वा मायाममोचयत् । अन्ततो घटोत्कचः स्त्रिस्रंसन् समयमनुस्मारयित्वा वृकोदरमुपच्छन्दयामास । समय इति निरुत्तरस्सोऽप्यन्वगच्छत् ॥

हैडिम्बेयः समातरमुपगम्य तस्या आहारार्थं आमादितं मानुषमदर्शयत् । हिडिम्बा विहस्य प्राह "उन्मत्तक मदुपवासेनाराधनीयं दैवतमेव त्वयाऽऽनीतम् । भीमसेनः खलु एषः । अभिवन्दस्व पितरम्" इति । स्वयमपि प्रणयिनमुपसृत्य जयशब्दमुदैरयत् । "भ्रूप्रभाख्यानामस्माकं वीरसुवा भवत्या महदुपकृतमिति सोऽपि तामभ्यनन्दत् । लज्जाविस्मयशबलमुखरागो घटोत्कचः पुत्रचापलं क्षन्तुमर्हसीति पितरमभिवाद्य तन्नियोगेन वृद्धब्राह्मणमपि अवन्दत । ततस्सत्कृतविसृष्टः केशवदासः तेभ्यः आशिषः प्रयुज्य स्वमार्गमनुससार । हिडिम्बा च स्वमनोरथस्सुपर्यवसन्न इति तुतोष ॥

---

# ॥ पाञ्चरात्रम् ॥

क्रमेणोत्तीर्णवनवाससमयबन्धेषु पाण्डुपुत्रेषु, प्रच्छन्नतया विराटनगरमधिवसत्सु, स्वजनवञ्चनामालिन्यं किञ्चिदिव प्रमार्ष्टुं कुरुराजो गुरुजनतोषणमनल्पविभूतिविश्राणनश्लाघनीयसमृद्धिं, यज्ञकर्मारेभे । तमामोदितुं विराटमन्तरेण समागतस्सर्वो राजमण्डलः, वासुदेवेन स्वप्रतिनिधित्वेन प्रेषितोऽभिमन्युश्च ॥

अथ सकलनरपाललोकसभाजितयज्ञपरिसमाप्तिस्सुयोधनो ब्राह्मणसन्तर्पणावसरे धनुराचार्यं द्रोणं तदभीष्टदक्षिणां ग्राहयितुमियेष । तदूर्जितवचनदत्तविस्रम्भो धर्मपक्षपाती आचार्यः "शकुनेरवलेपपारुष्यादुपलम्भितकान्तारभ्रमणानां निराश्रयाणां पाण्डवानां कुरुराज्यार्धसंविभागं, एषैव मम भिक्षा दक्षिणा च भविष्यति" इति समयाचत । निसर्गजिह्ममतिस्तु शकुनिः, "किमप्रस्तुतमुत्पाद्य युक्तेयं भवतद्विग्राप्यव्यवस्था" इति आक्षेपवचनरौक्ष्यमाशिश्रिये । तस्यानार्यभावं विगर्हमाण आचार्यो धर्मातिक्रमे बलात्कारेण पैतृकं राज्यं हर्तुं समर्थान् पाण्डुपुत्रान् व्यादिशत् । दुराक्षेपिणा च दुर्योधनेन कलहायते स्म ॥

तदा कर्णगाङ्गेयावुपान्तिके "मार्दवेनैव वाह्यो दुर्विनीतः शिष्यकार्यार्थिना भवता । अन्यथा विकुर्वीत" इति आचार्य प्रत्यबोधयताम् । द्रोणोऽप्यनुचिन्त्य सानुनयं पुत्रेणाभाष्य सुयोधनं "धर्मोऽयमिति, तव प्रभवतो मे वचनम्" इति च, प्रशमय भेदं पाण्डवेषु इत्युपादिक्षन् । दुर्योधनस्तु कार्यं शकुनिना समर्थयितुं इयेष । तेन ह्याचार्यः कार्यलोभात् मिथश्शकुनिमाहूय आलिङ्ग्य च ससान्त्वमात्मनो जरोपहतस्य क्रोधप्रायं वचनं क्षन्तुमभ्यर्थयामास । शकुनिस्तु प्रकृतिर्जिह्मतिस्सुयोधनेन पाण्डवानां राज्यार्धदानं प्रति निश्चयं पृष्टो न दातव्यमित्येवाब्रवीत् । अपि च सभामध्ये गुरोः प्रतिज्ञाय सत्यवचनात् प्रस्खलनं असम्मन्वानं सुयोधनं "अनृतवचनात् खलु त्वं मोचयितव्यः तन्निश्शङ्को भव" इति समाधाय उपसृत्य चाचार्यं व्यजिज्ञपत् । "यदि पञ्चरात्रेण पाण्डवप्रवृत्तिरुपानीयते राज्यार्धं प्रदास्यति किल कुरुराज" इति ॥

तदानीं भीष्मेण "पौत्र धर्मच्छलं मा भून् । सत्यप्रतिज्ञो भव" इत्यनुनीयमानोऽपि दुर्योधनः शकुनिमेवान्ववादीत् । तेन च "आद्वादशवत्सरादज्ञातगतयस्ते पञ्चरात्रेणोपलब्धव्या इत्यसुखनिर्वेदणमेव । हन्त! निष्फलाशंसोऽस्मि संवृत्तः इति विमनायमाने धनुराचार्ये, कश्चन दूतः प्रविश्य अज्ञातजनितकीचकभ्रातृशतनिधनव्यापदं विराटस्य यज्ञसभाजनानागमनकारणमुपन्यास्थत् । श्रुत्वैवं गाङ्गेयः—"अभीमस्यैतदुष्करं कर्म । दिष्टया सुगमा

पाण्डवप्रवृत्ति" इति प्रोत्सहमान आचार्य पञ्चरात्राभिसन्धिमभ्युपपत्तु त्वरयामास । पश्यश्च येन केनापि प्रकारेण विराटप्रधर्षणमेव तदाश्रितपाण्डुपुत्रप्रकाशनोपाय, स दुर्योधन विराटस्य यज्ञानादराहितागसो गोग्रहण कर्तु उद्योजयामास । अथ प्रातिष्ठन्त सर्वेऽपि यज्ञसभाजनागतैस्सह राजभिर्विराटनगरमुद्दिश्य समारूढरथतुरगास्सद्रोणभीष्मा धार्तराष्ट्रा । सन्निरुध्य च घोष तुरगखुराकीर्णधूलीपटलप्रच्छन्नपरिस्पन्दा परिवार्य राज्ञो वर्षवर्धनगोप्रदाननिमित्त नगरोपवनवीथ्या गोपालकैस्सह्रिष्यमाण गोमण्डल निर्दयमाहरन्ति स्म । अथ जन्मनक्षत्रमङ्गलनियाव्यापृते महाराजे, वित्रस्तगोपालककुलनिवेद्यमान गोधनहरणमुपश्रुत्य बृहन्नलाव्यञ्जनोऽर्जुन कुमारेणोत्तरेणाधिष्ठित रथ वाहयन्निर्गत्य, परिगृह्य च श्मशाने निगूढनिक्षिप्त गाण्डीव, दुर्योधनादीन् सन्ततशरधारावर्षेण कान्दिशीकतामनयत् । भीष्मद्रोणौ तदिदमर्जुनकर्मेति प्रत्यभिज्ञाय प्रहरणादुपरेमतु । अभिमन्यु केवल बाल्यादगणितभयो युद्धात्र निववृते । पुत्रमभियोक्तु वैक्लव्यादसमर्थ पार्थो विमोचितगोमण्डल परावृत्त्य रथ, भगवत्व्यपदेशेन युधिष्ठिरेण स्वस्त्ववाक्यैरूज्झ्यमानयुद्धाभियोगसम्भ्रम राजानमुपातिष्ठत ॥

तावता च विराटकुले सूदच्छद्मना स्थितो भीमो रणाजिरमाविश्य सङ्ग्रामभीममन्युमभिमन्यु हस्तेनावस्थापितान् रथादवतार्य परिष्वजन् विराटसमीपमुपनिन्ये। तत्राभिमन्युर्भीमार्जुनौ विराटश्च

शत्रुधिया पश्यन् विप्रलाञ्छनं युधिष्ठिरमेवाभिवन्द्य अवज्ञाभङ्गुरापाङ्गस्सावष्टम्भगम्भीरमवतस्थे । ते तु तमभिभापणकौतूहलेन बहुनुयुञ्जाना मुखरयित्वा गुरुगौरवगर्भितन्यक्कारमधुरं कुप्यता क्षिपता च तेन सुतरां रेमुः ॥

एतस्मिन्नन्तरे प्राविशन् बृहन्नळाप्रख्यापितालीकविक्रमप्रशंसामभृष्यमाणो यथावृत्तां सङ्ग्रामकथां राज्ञे निवेदयितुमाहितत्वर उत्तरः । प्रकाशयामास च बृहन्नळाव्यपदेशच्छन्नं गाण्डीविनमेव धार्तराष्ट्रविद्रावणम् । अथ निर्भिन्नप्रायं रहस्यमिति धनञ्जयस्सूदमेव भीमसेनं भगवन्तमेव च युधिष्ठिरं प्रात्यञ्जयन् । अतः पाण्डवास्तीर्णप्रतिज्ञत्वात् स्वं स्वमाविश्चक्रुः । विस्मितः प्रहृष्टश्च विराटपतिम्मत्स्यसन्धानां पाण्डवानां निवासेन स्वकुलं नष्टकल्मषममन्यत । अभिमन्युरपि "दिष्ट्या गोग्रहणं स्वन्तं पितरो येन दर्शिता." इति परितुष्य गुरून् सविनयमभिवादयाञ्चक्रे । अथ प्रीतेन राज्ञा गोग्रहणविजयशुल्कार्थं प्रदिष्टामुत्तरामर्जुनस्तनुपार्थे प्रतिजग्राह । भीष्मादीनाञ्चाभिमन्युविवाहावेदनायोत्तरमेव दूतं प्राहिणुतां विराटयुधिष्ठिरौ ॥

अत्रान्तरे दुर्योधनमदासि सर्वे सौभद्रस्य हरणेन पराभूता नात्मनो मन्यमाना भृशं विमनसस्तस्थुः । तत्प्रत्याहरणार्थं शकुनिवर्जमन्ये संभ्रममायन् । तीव्रवेगेन केनापि पदातिनाऽतिबलेन स बाल उत्क्षिप्य नीत इति सूतेनावेदिते, भीष्मद्रोणौ भीमस्यैव महाबलस्य लीलेयमिति प्रत्यपादयताम् । सूताहृतश्च शरः अर्जुन-

नामाङ्कित आसीत् । पञ्चरात्राभ्यन्तर एव पाण्डवप्रकाशं अनभिनन्दन्नीर्ष्याकुलः शकुनिः "अपि नाम भीमादन्यः प्रवीरो नास्ति, येनाभिमन्युग्रहणं घटते। किमिति न स्युरेतानि मार्गणानि अर्जुनाभिधस्य कस्यचित्सामान्ययोधस्य । पाण्डवानां राज्यप्रदानार्थिनो यूयमनृतमुद्भावयथ" इति तन्मतं निराकरोति स्म । इत्थं ससुयोधने शकुनौ खलभावेन विवदमाने, दूत्येन प्राप्त उत्तरो युधिष्ठिरसन्देशमाचख्यौ । पञ्चरात्राभिसन्धिस्संपूर्ण इति दक्षिणां सद्यः प्रदीयमानामपैक्षत द्रोणाचार्यः । सुयोधनोऽपि पाण्डवेभ्योऽर्धराज्यप्रदानमभ्युपजगाम । तेन हि सर्वे प्रसन्ना बभूवुः ॥



# ॥ दूतवाक्यम् ॥

अरण्यवासेन महद्दुःखमनुभूय संपूर्णसमयाः पाण्डवाः पुनः प्रति न्यवर्तन्त । तेषां प्रतिश्रुतपूर्वं धर्म्यं दायाद्यं विभज्य दातुमसंमन्वानो बलदर्पादाहवकुतूहली लुब्धस्सुयोधनो "नियतं ते विप्रकृताः हठमाश्रयेयुः" इत्युत्पश्यन् युद्धनिमित्तं सेनासन्नाहं चक्रे । मन्त्रयित्वा च स्ववर्गैः पितामहं भीष्मं सेनापतित्वमङ्गीकारयामास । शान्तात्मा युधिष्ठिरः कुलक्षयकरं बन्धुमित्रादिभिस्सह वृथा कलहं यथाशक्ति परिहरिष्यन् आहवदर्म सुयोधनं प्रति वासुदेवं दूत्यमग्राहयत ॥

बन्धुभिस्सामन्तैश्च सुयोधने मन्त्रशालामधितिष्ठति वासुदेवो दूत्येन तच्छिबिरद्वारि सन्निदधे । दूतस्यागमनं काञ्चुकीयो राज्ञे न्यवेदयत् । दुर्जनस्सुयोधनः पाण्डवावलम्बभूतस्याच्युतस्य तत्रैव ग्रहणं जयौपयिकं मन्यमान "आनीयतां स दूत" इत्यादिशत्। मन्त्रयमाणान् राज्ञश्चाज्ञापयत् "योऽत्र केशवस्य प्रत्युत्थास्यति स मया दण्ड्य" इति । स्वयमप्यालिखितद्रौपदीमानहरणवृत्तान्तं चित्रपटमानाय्य तस्मिन् दृष्टिविन्यासं कुर्वन् "एवं केशवमनालक्ष्येव स्थास्यामि" इति कृतनिश्चयोऽभवत् । अथ काञ्चुकीयप्रवेशिते वासुदेवे दृष्टमात्रे सर्वे नृपतयः संभ्रमविस्मृतात्मानस्तस्य प्रत्युत्तस्थुः ।

कृष्णसङ्कल्पेनाबुद्धिपूर्वकमासनाच्चचाल सुयोधनोऽपि । अनन्तरमासीनेषु सर्वेषु, मिथः कुशलानुयोगेष्ववसितेषु, वासुदेवो धर्मसूनोस्सन्देशं सुयोधनमाश्रावयामास ॥

अनुभूत महद्दुःखं संपूर्णस्समयस्स च ।
अस्माकमपि धर्म्यं यत् दायाद्यन्तद्विभज्यताम् ॥ इति ।

स्वयमबोधयच्च तं—"मा तावत्परस्परविरोधवर्धनेन कुरुकुलं नामशेषतान्नयतु भवान्" इति । स प्रत्यभाषत दुर्व्यवसायपरुषं इत्थं दुर्योधनः । "यमेन्द्रपवनाश्विनीदेवताप्रभवाणां कुन्तीसुतानां युधिष्ठिरादीनां मया सह बन्धुतैव नास्ति । कथं पुनर्दायाद्यभाजनता? अपि च राज्यन्नाम रिपुभ्यो भुजबलेनाह्रियते, न तु कश्चिद्याच्यते । यदि स्वबलपराक्रमे प्रत्ययस्साहसन्तं कुर्वन्तु" इति ॥

तस्योरिसक्तवच प्रत्याख्यात. कृष्णस्त साम्ना अप्रसाद्य मत्वा परुषाक्षरैरक्षोभयिष्यन्नर्जुनस्य विस्मयनीयानि वीरापदानान्यभिवर्ण्य "महाऽस्याद्धर्धराज्यमदद्महाप्रभावै पाण्डवैर्हृतारिखलराज्यो निपत्स्यसे" इति निर्भर्त्सयामास । दुर्दान्तस्तच्छ्रुत्वा सुयोधनः, "पितृभुक्ते वीर्यगुप्ते स्वराज्ये तृणमपि न दास्ये" इति सक्रोधं प्रतिजानन् मुहुरमधिचिक्षेप वासुदेवं गोपालक इति करितुरगभतुरगहननमात्रपौरुष इति राजभिरनाभाष्य इति च । एवमवज्ञातः क्रुद्धो वासुदेवः सहसा निर्गन्तुकामः प्रचचाल । तद्वीक्ष्य सुयोधनो "बध्यतां बध्यतां केशव" इति ससम्भ्रमं स्ववर्ग्यान् प्रेरयन्

तेष्वशक्त्या पराङ्मुखीभवत्सु द्विगुणीभूतरोषः स्वयमेवाभ्यपतन् कृष्णं बद्धुम् । तदा वासुदेवस्तस्य बालिशत्वमुपहसन् स्वं विश्वरूपमाविश्चकार । क्षणादेव क्वचित् ह्रस्वं क्वचिद्दीर्घं कदाचित्तिरोहितं पुनर्मन्त्रशालामावृत्य सहस्ररूपेण स्थितं च केशवं दृष्ट्वा मायामोहितस्सुयोधनस्सामर्षं, "एकैकैकः केशवो बध्यताम्" इति राज्ञश्चोदयन्, पश्यंश्च तान् स्वयमेव पाशैर्बद्धान्निपतितान्, "विद्ध्यामि शुष्कं त्वां कार्मुकेण" इति सशपथं धनुरानेतुं निश्चक्राम ॥

अनुचितभाषिणं दर्पान्धं तं निग्रहीष्यन् कोपाविष्टो वासुदेवस्स्मृतोपस्थितं सुदर्शनं प्राचोदयत् । स तु विमृश्य देवं व्यजिज्ञपत् ॥

महीभारापनयनं कर्तुं जातस्य भूतले ।
अस्मिन्नेवं गते देव ननु स्याद्विफलः श्रमः" इति ।

एवमुद्बोधितो वासुदेवस्तद्वाक्यमभिनन्द्य तं विससर्ज । भगवतः क्षोभमवेत्य समापतितान् शार्ङ्गकौमोदकीपाञ्चजन्यनन्दकान् वरायुधान् सरभसमुपसर्पन्तं च तार्क्ष्यं मार्ग एव प्रशान्तरोषं भगवन्तमावेद्य सुदर्शनः प्रतिनिवर्तयामास ॥

अथ निष्फलदूत्यश्रमं निर्जिगमिषुं वासुदेवं धृतराष्ट्रः प्रविश्य पादयोर्निपत्य पुत्रापराधस्य कृते क्षमापयामास । तेन चार्घ्यपाद्यादिनोपचरितः प्रतिगृह्य प्रसन्नो वासुदेवस्स्वशिबिरं प्राप ॥



# ॥ दूतघटोत्कचम् ॥

अथ प्रवर्तमाने महति कुरुपाण्डवसम्पराये अन्तरा छलमाश्रित्य भीष्मो निहतः पाण्डवैरिति जातरोषा धार्तराष्ट्रास्संशप्तकानीकानुद्रवणेन असन्निहितयोर्जनार्दनधनञ्जययोः एकाकिनस्समरमवतीर्णस्य प्रक्षोभयतः सर्वराजमण्डलं सौभद्रेयस्य वधेन वैरनिर्यातनमगच्छन् । येन दुर्योधनो "मर्मसु प्रहृतमर्जुनस्य उन्मूलितो जनार्दनस्य मदः निरस्तप्राया रिपवः सञ्चालिता पाण्डवजयश्रीः यद्द्वितीय इवार्जुनोऽसाववालपराक्रमो बालो निहत" इति साभिमानं ननन्द ॥

श्रुतपौत्रकवधवृत्तान्तस्तु गान्धारीजानिरतिमात्रसन्तापलक्ष्यहृदयो निजपक्ष्यान्धर्मविघातिनो भृशमकुत्सयन् । तदात्वे च अभिवन्दनागतान् दुर्योधनदुश्शासनशकुनीनाशीर्वचनेनाप्यनभिनन्दन्नसौ शुशोच । "अहह ! शिशुवधपातकिनामस्माकं नूनं वंशक्षयो भावी । अविपह्यपराक्रमो गाण्डीवी जनार्दनप्रयुक्तः किन्न कथाशेषतान्नेष्यति कुरुकुलप्ररोहानपि । एकपुत्र्या मे दुश्शलायाः बान्धवानां भवतां प्रसादात् वैधव्यमासन्नमिव पश्यामि । यदभिमन्युवधनिमित्तीभूतेन जयद्रथेन पार्थमार्गणानां आत्मा

प्रथमलक्ष्यीकृत । हन्त एकस्मिन्नसहाये बाले समुपेत्य प्रहरता बहूना क्षत्रबन्धूना कथ न पतिता भुजा" इति ॥

अथ कर्ण अर्जुनप्रतियोद्धारमुपन्यस्य दृष्यत सुयोधनस्य स्वपक्षपराक्रमे महतीं सम्भावना अवधीरयन्नुवाच धृतराष्ट्र — "दहनेन्द्ररुद्रेभ्य प्रतिपन्नावन्ध्यास्त्रदुराधर्ष क्व स फाल्गुन क्व चासौ तपस्वी व्याजोपलब्धविकलास्त्रबल प्रमादी कर्ण । सर्वथा पुत्रवधामर्षितस्य पार्थस्य वैराग्निरस्मान् धक्ष्यति" इति ॥

तदात्वे समुत्थितस्य महत शङ्खपटहसिंहनादरवोन्मिश्रस्य शब्दस्य प्रवृत्तिमुपलब्धुमागतो भट प्रविश्य न्यविदयत् । "संशप्तकानीकानपवाह्य प्रतिनिवृत्त पार्थो निहत पुत्रमङ्कस्थमश्रुभि परिषिञ्चन् जनार्दनावभर्त्सित —

येन मे निहत पुत्र तुष्टि ये च हते गता ।
श्व सूर्येऽस्तमसप्राप्ते निहनिष्यामि तानहम् ॥ इति

घोरा प्रतिज्ञामाख्यत् । तद्व्यवसायतुष्टे पार्थिवे प्रहर्षान् कृतेन सिंहनादेन भूरपि चचाल । अम्बराच्च पेतु प्रज्वलन्त्य उल्का" इति ॥

तच्छ्रुत्वा निहतमेव जयद्रथ मत्वा व्यसनार्णवे निमज्जन्त पितर पर्यवस्थापयन्नाह सुयोधन । "ननु प्रतिज्ञा व्याघाते प्रयत्नमातिष्ठामि । द्रोणोपदेशेन अभेद्यरूप व्यूह संयोजयित्वा आच्छादयिष्य जयद्रथम् । यावत्सूर्येऽस्तमिते अप्राप्तकामास्ते पाण्डवा खिन्ना ज्वलन विशन्ति" इति ॥

अस्मिन्नन्तरे भगवता चक्रायुधेन कौरवशिविरं प्रत्यभिमन्युवधमधिकृत्य प्राहितसन्देशः प्रेषितो घटोत्कचः व्योममार्गेण क्षणादागत्य धृतराष्ट्रस्य प्रणतिपूर्वकमात्मानं न्यवेदयत्। सादरदत्तश्रवसं च तमाश्रावयामास जनार्दनसन्देशम्। "अभिमन्युनिधनादविषह्यमन्युरशतमन्युसूनुस्सक्रोधव्यवसायरसर्वक्षत्रियविनाशाय गाण्डीवं धरिष्यति। तत्साम्प्रतमात्मनि धृतिमाधत्स्व, यथा ते पुत्रशोकसमुत्थितोऽग्निर्न दहेत्प्राणमथ हवि" इति। अथ सुयोधनः प्रत्युवाच च—"भवतापि श्रोतव्योऽयं जनार्दनस्य सन्देशः यथा तनयविनाशसमादीपितक्रोधस्योद्यतोग्रास्त्रस्यार्जुनस्य समरमुखे न कश्चिन् अजय्य। तदवगच्छ प्राप्तं क्षत्रियाणां विनाशम्" इति॥

तदा "अरे राक्षसोग्रस्वरूप! कथं मर्यादामतिलङ्घ्यास्मत् पुरतः रूक्षमेव वदसि?" इति दुश्शासनेनाधिक्षिप्तः हैडिम्बेयस्सावहेळमाह, "राक्षसेभ्योऽपि भवन्तः क्रूरतमा, येषां जतुगृहदीपनकृष्णावमर्शननालहननादीनि वीरलोकविगीतानि अपदानानि" इति। तमाह सावज्ञं सुयोधनः—"परुषं वदन्नपि दूत इति घृणास्पदं भवान्" इति। तेन च हैडिम्बेयः तथा चुक्रोध यथा धृतराष्ट्रो यदि नावारयिष्यन्नूनं साहसमकरिष्यत्। ससंभ्रमं च रोषं क प्रतिसन्देशं इत्यनुयुञ्जानस्सुयोधनेनागादि "हास्यमेतम् यत् पार्थेनैकेन व प्रभु कृत्स्नं राजमण्डलं निहन्तं वेत्ति। किं वाङ्मात्रेण वसुन्धरा जीयेत। छिद्यतां बहु भाषणम्। तिष्ठत्वाजिभूमौ। सायकैस्तस्य प्रतिवचो दास्यामि" इति॥

तद्वचोऽनुसन्धाय घटोत्कचो धृतराष्ट्रमापृच्छ्य "भो भो राजानः ! श्रूयतां जनार्दनस्य पश्चिमसन्देशः, "श्वः कृतान्तो वः पाण्डवरूपधारी सूर्यांशुभिः सममुपैष्यति" इति । तस्मात् जागृत" इत्युच्चैर्घुष्यन् शिविरान्निर्जगाम ॥

---

## ॥ कर्णभारः ॥

अथ तुमुलीभूते सङ्ग्रामे, पक्षद्वयाश्रयेष्वप्यसङ्ख्येषु महावीरेषु मद्भ्यनिहतेषु, विमुक्तसिंहनादैर्नरपतिसिंहैः परिवृतश्चतुरङ्गमहाबलं बलमनुविकर्षन्, युधिष्ठिरपराजयक्रुद्धो, विहितारातिविजयो विजयस्समरभुवमवातरत् । तमभियोद्धुं दुर्योधनप्रियचिकीर्षया, उद्धृतविपक्षशल्यस्सशल्यो निर्जगामाङ्गराजः । काममप्रतिहतपराक्रमो युद्धधौरेयः कर्णः, तदात्वे कमपि हृदयपरितापमुवाह । यदसौ मातृवचन-निवारितमात्मानमनुस्मृत्य, "कथं स्वावरजेष्वेव प्रहरामि" इति अनुक्रोशेनास्त; यच्च, "नाहं ब्राह्मणो" इत्यतिसन्धाय विद्याग्रहणात्कुपितस्य गुरोर्जामदग्न्यस्य शापान्निर्वीर्याणीवालक्ष्यन्त काले सुशिक्षितान्यप्यस्त्राणि, दैन्येन प्रतिनिवर्तनमिव सूचयामासुर्गजतुरङ्गमाः, मन्दमन्दमयश्च नि-स्तब्धतामगमन् ॥

तथापि—

> हतोऽपि लभते स्वर्गं जित्वा तु लभते यशः ।
> उभे बहुमते लोके नास्ति निष्फलता रणे ॥

इति कथञ्चित् धैर्यमास्थाय निसर्गकवचकुण्डलमहिम्ना अप्रधृष्यः कर्णो मद्रराजगृहीतप्रग्रहं रथमर्जुनाभिमुखं वाहयामास ॥

तस्मिन्नवसरे ब्राह्मणरूपेण प्रविश्य शक्रस्तस्मान्महत्तरां भिक्षां ययाचे । "भगवन्, किं काञ्चनाञ्चितशृङ्गं गोसहस्रं ते ददामि । अथवा काम्भोजप्रभवमनिलसमवेगमश्वीयं ते विसृजामि । उत गिरिनिचयोन्नतिमन्मत्तवारणयूथं स्पर्शयामि ।" इति सप्रणामं तमुदारमतिरुदाजहार कर्णः । एतेषु निरपेक्षं विप्रवरं दृष्ट्वा स वदान्यमूर्धन्यः, "किमपर्याप्तः कनकनिचयोऽभिमतः । किमखिलां पृथ्वीं जित्वा ते ददामि । किमग्निष्टोमफलजिघृक्षा । नेच्छसि चेत्सर्वमेतत् किं मच्छिर एव ते प्रार्थनीयं भवेत् । अथान्यदपि श्रूयताम्—

> अङ्गैस्सहैव जनितं मम देहरक्षा
> देवासुरैरपि न भेद्यमिदं सहास्त्रैः ।
> देयं तथापि कवचं सह कुण्डलाभ्यां
> प्रीत्या मया भगवतो रुचितं यदि स्यात् ॥"

इति सानुनयमभ्यभाषत । मघो "ददातु ददातु" इति कपटभूसुरस्सोऽयाचत । तदात्वे तस्मिन् जातशङ्कोऽपि कर्णो दानशौण्डीरतया "धिगयुक्तमनुशोचितुम् । न प्रतिज्ञामपलपामि ।

अपि च पात्रेषु यद्दत्तं तन्न शुष्यति, नापक्षीयते, न विपर्यस्यति कालेनापि । तत्तुष्यत्वेष ब्राह्मणः" इति सव्यवसायः कवच-कुण्डले आत्मनो देहान्निकृत्य तस्मै प्रादात् । गृहीत्वा चार्जुन-पक्षपाती निश्चक्राम मघवा ॥

कर्णस्त्वनुपदमेव विदितयाथार्थ्योऽपि,—

"अनेकयज्ञाहुतितर्पितो द्विजैः
किरीटिमान् दानवसङ्घमर्दनः ।
सुरद्विपास्फालनकर्कशाङ्गुलिः
मया कृतार्थः खलु पाकशासनः ॥"

इति परां परितोषतुलामारुरोह । न पुनर्वञ्चितोऽहमिति शुशोच ॥

अथ पश्चात्तापस्पृष्टहृदयेन पुरन्दरेण पाण्डवैकपुरुष-वधार्थममोघमस्त्रं विमला नाम शक्तिर्देवदूतद्वारा कर्णाय प्रदिष्टा । तां प्रतिगृह्य, "अफल्गुवीर्यस्स फाल्गुनो यत्र, तत्र प्रचोद्यतां रथः" इति शल्यं सन्त्वरयन् युद्धप्रस्थानमकरोदङ्गराजः ॥



# ॥ ऊरुभङ्गः ॥

अथ रणाहतगजाश्वनरेन्द्रयोधसङ्घसमाकीर्णे, पिशितासृक्पूरपर्याप्तपारणालुब्धविहङ्गमभ्रमणोड्डामरावकाशे, शङ्कुप्रासासितोमरभिण्डिपालशूलमुसलमुद्गरगदादिभिरायुधशतैराचिततले, नृत्यत्कबन्धे, विरुवच्छिवाशिवध्वनौ, स्रस्ताधोरणतया विद्रवन्मत्तहस्तिनि, सूतप्रणाशप्रचलितहयापवाहितस्यन्दनशताकुले, रुधिरासारकलिलप्रदेशे, प्रतिभयतामावहति समन्तपञ्चके, विपन्नागण्यराजन्यमण्डले क्षीणप्राये च उभयपक्षे, द्वैपायन-हलायुध-कृष्ण-विदुरप्रमुखानां कुरुकुलदैवतानां प्रत्यक्षमन्योन्यवीर्यस्पर्धिनोरतिचिरसञ्चितामर्षदुस्सहामहयोस्सुयोधनवृकोदरयोः प्रावर्तत महान् गदाविग्रहः । सुशिक्षितमल्ललीलाविशेषविचित्रिते बहुप्रकारप्रवृत्ते च तस्मिन्, अन्तरा निर्भिन्नामललाटवान्तरुधिररूषितः भग्नांसकूटः सुयोधनगदाप्रहारशिथिलीकृताङ्गो निपपात भीमसेनः । तादृशं तं उपहसन्नाह धार्तराष्ट्रः, "न खलु, भीम, दीनं निहन्ति वीरस्समरेषु । तन्मा भैषी." इति । एवमुपहस्यमानं भीमं दृष्ट्वा कृष्णः स्वमूरुमभिहत्य कामपि संज्ञां प्रायच्छत् । तया संज्ञया समाश्वासितः प्रत्यागतप्राणसारो मारुतिर्गदां प्रगृह्य सहसोत्थितः गर्जन् धर्ममनादृत्य अनवेक्ष्य च समयं सुयोधनोर्वोः भयदां गदां

मुमोच । तेन च जर्जरोरुः प्रस्रवद्रुधिरोपसिक्तभूतलः पपात कुरुराजः ॥

तदा दुर्योधनापेक्षया प्रतिपन्नक्रोधं हलायुधं दृष्ट्वा सम्भ्रान्तैः पाण्डवैः श्रमशिथिलाङ्गः भीमः सद्यः कृष्णकरावलम्बलम्भितगतिः अपावाहित । तस्मिन् अपक्रान्ते प्रबलामर्षसंरक्तलोचनः हलधरो राजानमभिवर्तमानः समुत्क्षिपन् हलमुद्गर्जन् । "अवधूयरणाभिमन्धिमनालोच्य च पुरस्थितं मां कथं भवान् भीमेन वञ्चितः । एष रिपुबलप्राणहरेण, कालिन्दीजलवर्त्मदेशिकेन लाङ्गलमुखेन केदारानिव विदारयामि पाण्डुपुत्रान् । प्रतिपालयतु भवान् क्षणमात्रम्" इति । अन्वतप्यत च भृशं रुधिरानुलिप्तच्छविं भूसंसर्पणधूलिधूसरितं अधोपरतैरङ्गैः भूमौ विवेष्टमानं पश्यन् तपस्विनं दुर्योधनम् । तमाह प्रसादं याचमानः सुयोधनः सानुनयं, "भगवन्, विमुञ्च रोषम् । जीवन्तु ते कुरुकुलस्य निवापमेघाः पाण्डवाः । अलं विग्रहकथया । प्रशाम्यतु वैरम् ।

"प्रतिज्ञावमिते भीमे गते भ्रातृशते दिवम् ।
मयि चैवं गते राम विग्रहः किं करिष्यति ॥"

अपि च यदहं जतुगृहात् आत्मनिर्वाहिणा हिडिम्बराक्षसमर्दनेन वैश्रवणालयप्रक्षोभिणा महाप्रभावेण भीमेन छलमाश्रित्यैव जितः तदहमद्यापि अजित एव । इदमपि पश्यतु भवान् । सर्वमेतल्लीलागोपकिशोरकस्य भगवतो नारायणस्य संविधानकमेव । किमत्रानुशोच्यते" इति ॥

अत्रान्तरे पुत्रशतवियोगशोकाभिभूतहृदयो धृतराष्ट्रः पुत्रदत्तमात्मनो निवापमसहमानं कृतान्तहतकं विगर्हमाणः "हा पुत्रक! क्वासि देहि मे प्रतिवचनम्?" इति अतिकरुणं रुदन् दुर्जयेन आदिश्यमानमार्गो दुर्योधनाभिमुखं अभ्यवर्तत। तमन्वास्ते स्म पतिधर्मचिह्नं नयनपट्टबन्धमजस्रैः अस्रैः आर्द्रयन्ती गान्धारी, प्रत्यासन्नवैधव्यदुःखतया अतिमात्रविक्लबहृदये देव्यौ च। अथानीशतया गात्राणामपहृतपितृभिवन्दनस्वातन्त्र्यस्य, प्रकाशीकृतमूर्धजं रणाजिरप्रविष्टं अवरोधजनं च पश्यतः राज्ञो हृदये न ममौ मन्युपरिवाहः। तदा बाल्यभावादज्ञातसमयविशेषदौरवस्थ्यं परिचितविधिना स्वमङ्कमारोहन्तं दुर्जयमसह्यवेदनतया सहसा निवारयन्नतिमात्रं विषादेनान्तरदह्यत स पुत्रवत्सलः। निरतिशयसन्तापकारिणीं एतादृशीं दुर्गतिमापन्नं तनयमुपसृत्य धृतराष्ट्रः शतमुखप्रवृत्तदुःखप्रवाहः शोकाम्बुलुलितलोचनतया पुनरुक्तान्ध्यः भूमौ पतित्वा करुणतरं विललाप। तमाश्वासयन्नाह कुरुराजः, "त्वत्पादमात्रप्रणतमौलिरपरिक्षतेन मानेनैवापराङ्मुखो हतस्तव सुत इति शोको निगृह्यताम्। क्रियतां मयि अनुग्रहः" इति। अथ मातरमाभाष्य, "यदि पुण्यं मया कृतं त्वमेव अन्यस्मिन्नपि जन्मनि मम जननी भवितुमर्हसि" इत्यवदत्॥

क्रमेण च शोकार्तमवरोधजनं यथोचितं पर्यवस्थाप्य स्निग्धं आहूय पुत्रं, "अहमिव पाण्डवाञ्शुश्रूषितव्याः। कुन्त्या

निदेशे वर्तस्व । द्रौपदी सुभद्रा चोमे मातृवत्पूजयितव्ये । मन्नामावसाने युधिष्ठिरं स्पृशता त्वया तेन सह मम निवापो देयः" इत्यादिक्षन् ॥

तदात्वे मूर्तिमानिव वीरो रसः ससम्भ्रमं कार्मुकहस्तः प्रविश्य द्रौणिः अखण्डितपराक्रमैः भीष्मद्रोणादिभिराश्रितनिजपक्षमपि निजवान्योन्मुखैकादशवाहिनीपरिरक्षितमपि छलजितमासन्नमृत्युमभिहतगजतुरगनररथप्राकारमध्यपतितं कुरुराजमभिवीक्ष्य क्रोधव्यलीकाभ्यां पर्यायोपतप्तहृदयः स्तोकावशेषे कुरुकुले प्रशाम्यन्तमपि युद्धदावानलं वैरनिर्यातनार्थं पुनरुज्ज्वलयिष्यन् धीरमेवमुदगर्जन् । "भोः कुरुराज! अद्य समुद्यतास्त्रः निशासमरमुत्पाद्य रणे धक्ष्यामि पाण्डवान्, आपततु वा स्वयमेव कृष्ण आविष्कुर्वन् चतुर्भुज-शङ्ख-चक्रादिलक्षणं गरुडे निविष्टं निजं रूपम्" इति ॥

अथ मा मा भवानेवं—

"गतं धात्र्युत्सङ्गे सकलमभिषिक्तं नृपकुलं
गतः कर्णस्स्वर्गं निपतिततनुश्शन्तनुसुतः ।
शतं भ्रातॄणां मे हतमभिमुखं संयुगमुखे
वयं चैवं भूता गुरुसुतधनुर्मुञ्चतु भवान् ॥"

इति सुयोधननिवारितसम्भ्रमोऽपि, "सर्वथा कृतप्रतिज्ञोऽस्मि । अद्यैव ब्राह्मणस्य मम वचनात् पितृमुक्ते राज्ये दुर्जयो विना-

ऽभिषेकं राजा भवतु" इत्यहार्यनिश्चयो बभाषे । समनन्तरक्षण एव सुयोधनः पुरत समुत्थितान् कुलपूर्वपुरुषान्, सकर्णं भ्रातृशतं, क्रुद्धं अभिमन्युं, महार्णवान्, अप्सरसश्च विभावयन्, कालेन प्रेषितं सहस्रहंसप्रयुक्तं वीरवाहिनं विमानमधिष्ठाय स्वर्गमारुरोह । ततो निर्विण्णो धृतराष्ट्रः पुत्रप्रणाशविफलं राज्यं परित्यज्य सज्जनाश्रयाणि तपोवनानि रोचयामास । अश्वत्थामा च सौप्तिकवधोद्यतपाणिरसशपथं निरगात् ॥

इति प्रथमो भाग ।



द्वितीयो भागः ।

# ॥ श्रीरामचरितम् ॥

यस्मत्ये गुरुमामयन्नुपनतां तत्याज राज्यश्रियं,
यस्सन्तोषयितुं प्रजाः परिजहारापन्नसत्त्वां प्रियाम् ।
तस्योपाश्रितकौशिकराक्षसपरित्राणप्रतिष्ठागुरो-
र्धर्मे सूक्ष्मगतौ जयत्यजनिजाज्ञानैरभेद्या स्थितिः ॥

## ( १ )

आसीदशेषकल्याणनिलयेषु कोसलेषु अयोध्या नाम
यथार्थाभिधाना राजधानी । तत्र च प्रमुदितप्रजावत्सलानां,
रखण्डविक्रमाणां चण्डभानुवंशमहत्तराणां ललामभूतः पुलोमजा-
रमणेनार्घासनप्रदानपूर्वकं समाजितः, सुरासुरसङ्ग्रामेष्वप्यप्रतिहत-
प्रहारयो दशरथो नाम राजा लीलानुशासितमहीवलयस्सुचिरं
व्यलासीत् । स च बहुवर्षसहस्राणि राज्यभारं निर्वाह्य परिखिन्न-
स्संजातजरावैक्लव्यो विषयव्यावृत्तकौतुकश्चरमजवमिक्ष्वाकूणां

वैखानसीं वृत्तिमाशिश्रयिषुः कुलामात्यप्रकृतिमण्डलानां सुचिर-संभृतकौतूहलमनुरुन्धानो वय.स्थं जनलोचनचन्द्रं रामचन्द्रं राज्यश्रिया सङ्गमयितुं तत्वरे ॥

अथाभिषेककृताभिमुख्यैर्वसिष्ठमुख्यैरुद्दिष्टे पुण्येऽहनि संप्राप्ते, प्रहृष्टनरनारीजना, संयोजितविशेषालङ्करणविधिपरिशोभमाना, समन्ततः प्रचलितोत्सवमङ्गला साकेतनगरी प्रतिक्षणं नूतनेव कामपि श्रियमुररीचकार । समाह्रियन्त च राजकुले तद्विधावसरोचितसम्भ्रमेणाभिषेकसंभाराः । तथा हि—समुदश्रायि सव्यजनं छत्रम् । अकल्प्यत सनन्दिपट्टं भद्रासनम् । न्यस्यन्त च तीर्थाम्बुपूर्णास्सुवर्णघटाः । अयुज्यत पुष्यरथः । सन्न्यधीयन्त सामात्यपुरोहिताः पावनदर्शनास्सहस्रमवनीसुरा. । एकप्रकारसंक्षिप्तास्सभायां पौरजानपदाश्च सममेल्यन्त । स च भगवान्वसिष्ठः कालोचितक्रियाकलापप्रत्यवेक्षणव्यग्रः पवित्रावकाशां वेदीमध्यतिष्ठन् । धुर्ये स्वतनये क्रमेण भुवनरक्षाधुरमवतारयिष्यति दशरथे तत्सौराज्येन चिरानुभूतस्वास्थ्योऽपि गुणपक्षपाती जनोऽकृतपूर्वं तोषमधत्त ॥

अथ परिणामोन्मुखमनोरथो दशरथस्सभायां स्निग्धतरमाभाष्य तनयमङ्कमारोप्य, साश्रुगद्गदं, "पुत्र, राम, प्रतिगृह्यतां राज्यम्" इत्युदाजहार । विनयाद्बहुमानाच्च तदप्रतिपद्यमानं चरणपतितं रघुनन्दनं निर्बन्धतः भ्यमतमङ्गीकारयामास च । अथारब्धे पठहे, भद्रासनलङ्घिनि रामभद्रे शत्रुघ्नलक्ष्मणगृहीतो-

न्नमितेऽभिषेकघटे, छत्रे च स्वयं नृपतिना गृहीते, अन्तरा प्रविश्य मन्थराभिधाना सरभसमवनीपतेः कर्णे किमपि जजाप। तया किल सद्यो विनिवृत्ताभिषेकमङ्गलया प्रफुल्लपौरजानपदमुखराजीवे सदस्यकालोपनतनीहारवृष्टिलीला व्यधायि। दशरथोऽपि वज्रनिर्घातेनेव प्रक्षुब्धमतिस्सञ्जातशोकज्वरज्वालापरीतकरणस्सवैष्टव्यमाहूय तनूभुवं कृच्छ्रेण विश्रमितुं विससर्ज। स तु प्रतिनिवृत्तेऽपि राज्यलक्ष्मीप्रतिग्रहमहोत्सवे, अलोलुपतया, अतिगम्भीरतया, यथाभूतवदनोल्लासोऽभिवन्द्य पितरं दिष्ट्या स एवास्मि राम इति मोदमानो मैथिलीमिमं वृत्तान्तमधिगमयितुं धृतकौतूहलस्तदावसथमाससाद॥

तत्र चाभिषेकवार्ताहारिणे चेटीजनाय परितुष्य प्रत्तसर्वाभरणशून्यीकृताङ्गलतां, नेपथ्यपालनीमुपहसितुं अवदातिकया चेट्या चोरितोपहृतं वल्कलयुगळं कौतुकेन परिधाय, "किं मे शोभत" इति सखीजनमनुयुञ्जानां, तदात्वेऽप्यक्षीणलावण्यसम्पन्नमनोहरां हृदयदयितां दयितामालुलोके। कृतसम्भाषश्च तया क्षणं यावत्तिष्ठति तावत् "हा हा महाराज" इति नरनारीजनस्य निर्मर्यादो महानार्तध्वनिः श्रोत्रपथमवातरन्॥

ततस्सत्वरापतितः कञ्चुकी राज्यलोभाद्भरताभिषेकं याचमानायाः कैकेय्याः कार्कश्यमभिचुक्रोध। निजपक्षपातेन गुरुजनमपवदन्तं तमवस्थापयन् प्रत्याह राघवः—"आर्य, किमत्राक्रोशस्थानम्? गुणानेव पश्यामि मदभिषेकनिवृत्तौ॥

वनगमननिवृत्तिः पार्थिवस्यैव तावत्
मम पितृपरवत्ता बालभावस्स एव ।
नवनृपतिविमर्शे नास्ति शङ्का प्रजानां
अथ च न परिभोगैर्वञ्चिता भ्रातरो मे ॥

अपि च—

शुल्के विपणितं राज्यं पुत्रार्थे यदि याच्यते ।
तस्या लोभोऽत्र नास्माकं भ्रातृराज्यापहारिणाम् ॥"

इति । समादिशच्च कञ्चुकिनं मातृपरिवादं विना महाराजवृत्तान्तं अभिधातुम् । श्रुत्वा च तन्मुखादतिसृष्टकेकेयीप्रार्थनं सद्यो मोहमुपागतं राजानं नितरामसिद्यत ॥

तदनु धनुष्पाणिराविर्भूय क्रोधमूर्च्छितो लक्ष्मणः प्रक्षुब्ध इव प्रलयवारिधिरित्थमुदगर्जत् । "अहो बत क्षत्रियाणामपि क्षीणसत्त्वता । धिक् एते वयं विश्रुतवीरापदानाः प्रक्रान्तचापलयाप्यबलया केवलमेवं परिभूयामहे । तन्नालमस्याः पापाशयाश्चिरकाङ्क्षितसङ्गमेऽप्यार्येऽभिनिविशमाना यदियमपघर्षं निर्भरासूययेव राज्यश्रियम् । पश्यत लोभानुमूलिताया नृशंसताया विलसितम् । मणिमकुटधारणप्रसाधितेन शिरसा तन्मुहूर्त एव जाटामाबद्ध्य चतुर्दश वर्षाणि नाम वनमवनोधिवेन भवनीकर्तव्यम् । जराजर्जरमतिनाप्यवनीपतिना नियतिरिव दुर्व्यवसेयं केनाप्यसम्बद्धेन धर्मव्यवहारेणानतिक्रमणीयेति कृत्वा दुःखदावानले निपात्यते ह्यात्मा । वयन्तु प्रचलितास्तथो युवतिरहित-

मेव भुवनतलमखिलमापादयितुम्। तिष्ठतु तावदार्यो यदि न मन्यते। मुञ्चतु मां भवान् यतः कलितनिश्चयोऽस्मि" इति॥

इति समारब्धसंरम्भभीषणं तमनुजन्मानं पेशलाक्षरैः सान्त्वनोपक्रमैर्मातृनियोगप्रतिबद्धस्वातन्त्र्याणां पातकपर्यवसायि-त. क्रोधस्यानवसरमुपदर्शयन्समाधाय रामचन्द्रस्तस्य हृदयोत्तापं शनैरशामयत्। उररीचकार च प्रशान्तगम्भीरे मनसि कनिष्ठ-भानुः प्रत्यक्षोदीरितनिर्विशेषमविलङ्घ्यरूपमनुशासनमुरुतोषेण॥

अथ तदात्वोपनतान्सीताकौतुकवर्धनश्रद्धया नेपथ्यपालन्या स्वयं प्रेषितानन्याननुभूतान् वल्कलानात्मने रामः प्रतिगृह्य दुर्निवारानुगमनव्यवसायेन सौमित्रिणा सह विभज्य सत्वरं पर्यधात्। धृतारण्यकवेषश्चानपेक्षितगुरुजनामन्त्रणविधिर्मुहूर्त-मवविष्टम्य वत्सेत्यतिकरुणमुत्पन्नमापतन्तमपि तातं श्रुत्वा कान्तारगमनप्रत्यूहपरिजिहीर्षया दृढनिश्चयाऽऽकलनकठोरहृदयः क्षणमात्रमपि विलम्बमसहमानः प्रार्थितयापि प्रथमप्रतिपन्नचीर-परिधानमपरित्यजन्त्या प्रकाशितानुप्रवसनसिद्धान्तया कान्तया परिरक्षितपार्श्वस्सौभ्रात्रशेवधिना लक्ष्मणेन पुरो निर्दिश्यमानमार्गो दीनाक्रन्दनशरणपौरलोचनाम्बुप्रवाहोपसिक्तनीरजीकृतप्रतोलीं त-दुपक्रममुत्सादितोत्सवाशंसां रघूत्तंसः पुरीमयोध्यामतिलङ्घ्य मन-चलद्विपिनाभिमुखम्॥

निर्गते च सदारानुजे रघुनन्दने नरपतिः पतन्निव पतङ्गः शुष्यन्निव महोदधिः विशीर्यन्निव धरणीधरः पारे वाचामङ्कै-

राधिपरिक्षीणैः कार्पण्यमुद्वहन्नसह्यपीडेन हृदयावस्कन्दिना शोकशङ्कुनाऽतिकरुणमन्तस्संज्वलितः कौसल्यासुमित्राभ्यां स्वयं निगृहीतात्मशोकाभ्यामन्वास्यमानः चरमशय्यामधिशिश्ये । स तदानीमतिभूमिं गतेन चिन्ताव्याधिना शिथिलेन्द्रियमतिर्व्यथमाने विवशमनेकधा व्यचेष्टत । तथा हि—शश्वदाविष्टतीव्रमन्युपिशाचिकावेगादिव शयनादुत्थायोत्थाय न्यपतत् । मुहुर्मुहुः स्मृतिवशादाघट्टितहृदयनिरातकैकेयीदुर्वचनशल्य इव दुस्सहवेदनामनुभवन् हा हेत्युच्चैर्विललाप । परित्रापयितुमिवात्मान-मवलाव्याली मुखात् पुनःपुना राम रामेत्याचक्रन्द । मृत्युपरिगृहीतस्य मे चरमदर्शनं वितरत पुत्रका इति पदे पदे भृशं परिदिदेव। परिपालितपितृसङ्गरो महाप्रभावोऽनया गर्भे धृत इति वारं वारमतिमानेन बहुमानेन प्रियवचनैः कौसल्यामन्वरुध्यत । पुत्रविवासनेन कृतापकारमात्मानं क्षमापयितुमिव दीनवदनस्तामसकृन् निश्वसन्नवलुलोके । धिङ्मां स्त्रीमतिपरिगृहीतं लोकोपहास्यं मन्दधियमिति विलज्जमान इव भूयो भूयो मोहमहातमसि निलिल्ये । निसर्गोऽनुकम्पिनापि प्रियनन्दनेन निरनुक्रोशमुपेक्षितस्य मम कोऽर्थो जीवितेनेति वैराग्यादिव शोकदावानले प्राक्षिपत्स्वमात्मानम् ॥

तस्य च तदा निरतिशयतनयविरहानलपरिप्लुष्टहृदयस्यानारतं प्रमुह्यतः प्रतिबोधं विना कौसल्यासुमित्रयोरपि प्रत्यभिज्ञा दुरशकैवासीत् । अदृश्यभूते लोचनसुधाकरे रामचन्द्रे विसृत्वरतमो निमीलितमिव नयनयुगलमन्धीबभूव । रामान्वेषणप्रस्थितेव प्रयत्नावस्थाप्यमानापि बुद्धिः स्वनियोगाद्भ्रंशे ॥

एवमप्रतीकारायां दशायां वर्तमानं सकृत्स्त्वान्तमुपालभमानं सकृदात्मानमेव दुष्कृतकारिणं कुत्सयन्तं, कदाचित्कैकेयीं विगर्हयन्तं भूयस्सस्नेहशोकं पुत्रकानाहूयोन्मत्तवद्बहुप्रलपन्तं अतिकरुणदर्शनं, पार्थिवं रामसकाशात्प्रतिनिवृत्तस्सुमन्त्रस्सविषादमुपगम्य व्यजिज्ञपत्—"देव, शृङ्गिबेरपुरं प्राप्य ते महाराजस्य प्रणाममावेद्य कमप्यर्थं विज्ञापयितुमारभमाणा बाष्पस्तम्भितकण्ठत्वात् किमप्यनुक्त्वैव वनोदरमविशन्" इति । तच्छ्रुत्वा महीपतिः कैकेय्या दुरामहानुचिन्तननिष्पीडितहृदयः—

गतो रामः प्रियं तेऽस्तु त्यक्तोऽहमपि जीवितैः ।
क्षिप्रमानीयतां पुत्रः पापं सफलमस्त्विति ॥

सावेगाक्रोशमुदीरयन् निजपुत्रकाणां पुनरवलोकनैराश्याद्द्विगुणीभूतमोहोपहतचेतनः प्रतिक्षणं परिशुशोष । अन्ततः स्वमाश्वासयितुमिवोपागतैः तत्क्षणप्रत्यक्षितैः दिलीपाजमुख्यैः पितृभिरुपच्छन्दितमात्मानं सम्भावयंस्तैस्सम्भ्रिगमिषुः "अयमहमागच्छामि" इति वचसैव मूर्च्छया परामृष्टः स क्षणाद्दिविपदवमथमारुरोह ॥

अनन्तरमराजकोपहतमिक्ष्वाकुजनपदमवलोक्य विधिज्ञैर्वसिष्ठानुमोदितैरमात्यमुख्यैर्दशरथवचनमर्थयरकुर्वद्भिः आबाल्यान्मातुलकुले वासव्याय भरताय प्रेषितस्समूतो रथः । स च, स्वस्थकल्यशरीरो महाराज इति केवलमाश्वासितनिजोपप्रेषणहेतुस्सूतेन चलद्दुरकण्ठितम्त्वरितं अयोध्यापरिसरमुपासीदत्, "एकनाडिकां यावत्प्रतिपाल्य प्रतिपन्नायामेव रोहिण्यां पुरीं प्रवेक्ष्यति

कुमार इत्युपाध्यायेन विज्ञापित क्षणं विश्रमितुकाम उपान्तिके वृक्षान्तराविष्कृत देवकुल प्रविवेश ॥

तत्र च विश्वसनीयमानुषभावाना चतु प्रतिमाना स्तोम-मालोक्य नमितशिरा वन्दितुमुपक्राममसौ सहसोपेतेन देवकुलि-केन, 'क्षत्रिया ह्यत्र भवन्तो, न भवादृशस्य प्रणामार्हा' इत्यवार्यत । अथ विस्तर पृष्टस्स देवकुलिको, यावत्तिस्र प्रतिमा दिलीपरघ्वजानाभिक्ष्वाकुकुलपूर्वपुरुषाणान्नामतो निर्दिश्य दशरथा-कृतिसवादिनीं तुरीयामुपासीदति तावत्पर्याकुलो भरत, "किं धरमाणानामपि प्रतिमा स्थाप्यन्ते" इति त पर्यप्रच्छत् । सोऽवदत्—"न खलु । अतिक्रान्तानामेव" इति । अत पर श्रोतुमक्षमो भरत कमप्यत्याहितमापतितमाशङ्कमानो यदा सरभस-मपचक्राम तदा देवकुलिक क्रूरमेवमभाणीत्—"तिष्ठ,

येन प्राणाश्च रा॒ज्य च स्त्रीशुल्कार्थे विसर्जिता ।
इमा दशरथस्य त्व प्रतिमा किन्न पृच्छसि ॥" इति ।

श्रुत्वैव अशनिहत इव मुमूर्च्छ कैकेयीसूनु । अथ प्रतिबुध्य, तादृशावस्थाविशेषेण स्व कैकेयीपुत्र प्रत्यभिजानत तस्य मुखादेव शुल्कलुब्धया स्वजनन्या ससीतालक्ष्मणमरण्याय निर्वासित राममवगत्य, "कथ कथमार्योऽपि वन गत ? किमहमुपहृतभाग-धेय पित्रा भ्रात्रा च वर्जितामटवीभूतामयोध्या पिपासार्त्त क्षीणतोयामिव नदीमनुधावामि ?" इति शोचन् स द्विगुणितमोहा-भिभूतचेतन निस्सञ्ज्ञ पपात भूपृष्ठे ॥

तत्क्षणमुपतस्थे तत्र सुमन्त्रोपदिष्टमार्गं दशरथप्रतिमा-दिदृक्षया कौसल्यापुरोगमन्तःपुरम् । तदा देवकुलिकेन निर्दिश्य-मानावस्थं भरतं प्रत्यभिजानन्त्यः परिवार्य देव्यः पर्यदेवयन् । अथ मातृकरावमर्शोपलब्धसंस्पर्शो भरतस्समाश्वस्य सुमन्त्र-निर्दिष्टनामधेये कौसल्या–सुमित्रे अभिववन्दे । कैकेयीं पुनरव-लोकितुमपि नैच्छत् । किञ्च निपातिता वयं सान्वयास्सपौर-जानपदास्सर्वे भर्तृद्रोहिण्या नृशंसया त्वयेति तां भृशमधिचिक्षेप। अथ च, "जात, किं मया कृतम्? महाराजस्य सत्यवचनं रक्षन्त्या मया तथोक्तम् । तत्रापराध्यति ते शुल्कलुब्धो मातामह" इति प्रक्रान्तसान्त्वनां कैकेयीमभिक्रुद्धो भरतः—"कथं शुल्के मभार्यस्यार्यस्य वनवासोऽप्युदाहृतः । यदि ते राज्यफलतर्षः, किं नरेन्द्रो न दद्यात् । किमर्थं मन्नाम कीर्तयित्वा मामयशस्समस्त-काण्डे पातितवत्यसि । रुष्टं कृतं भवत्या । म्रियमाणः पतिर्न गणितः । दयिततनयाः क्रोशन्त्यो नानुकम्पिताः मातरः । कृत्स्ना-प्ययोध्या रोदनशरणा नावेक्षिता । न गणितोऽप्यात्मा धिगिति वचसा लोके समानुष्टः । अहो धात्रामृष्ट भवत्या हृदयं वज्र-कठिनम् । धिक् त्वां दुष्करकारिणीम्" इत्ययमर्त्सयन् तस्या न प्रससाद । अभिषेकमधिकृत्य च सह प्रकृतिभिः प्रत्युद्गम्य वसिष्ठ-वामदेवाभ्यां विज्ञापितो, "राज्यलुब्धायै इहात्र भवत्यै प्रदी-यताम्" इति निष्ठुरमुक्त्वाऽप्रविशन्नेवायोध्यां रामतपोवनमभि-प्रतस्थे ॥

समुपगम्य च चित्रकूटाचलोपरचितां भ्रातुः पर्णशालां कैकेयीचापलात्सङ्क्रान्तकृतघ्नभावमिव स्वं मन्यमानो लज्जमानमानसो भरतो दूरादेवोपावर्तमानस्समुपस्थितमात्मानं सविगर्हमुद्घोषयत् । तदा स्पष्टघनेन हृदयानन्दनेन बन्धुजनबहुमानावहेन तस्य तेन स्वरसंयोगेन स्नेहपरिक्लिन्नहृदयो रामस्सौमित्रिं पुरुषविशेषमवधारयितुमभ्यचोदयत् । तद्वचनेनाभिमुखापतित लक्ष्मणं निजाग्रजं सुमन्त्रेण निवेद्यमानं कैकेयीमूनुर्यथोचितमभ्यवादयत् । अथ लक्ष्मणमुखाद्विदितनिजागमनं राघवं, मैथिल्या सादरं प्रत्युद्गम्य प्रवेशितो भरतस्सभक्तिविनयमुपसृत्य स्वनामनिवेदनपूर्वकं प्रणनाम । तदानीं रामभद्रः प्रेमद्रढिम्नेनमाश्लिष्य, सुमन्त्रं च दृष्ट्वा तातव्यपायाश्रितया कथया प्रकीर्णबाष्पपूरश्शोकव्याकुलितेन्द्रियस्सुचिरमवतस्थे ॥

अनुपदमभ्याश एव स्नातुकामं भरतं, "वत्स, पालनधर्माणो वयमिक्ष्वाकवः । तदनुचितमिहावस्थातुम । अपि च भवद्विधं श्लाघ्यगुणं पुत्रमुत्पाद्य किं नाम नः पिता मिथ्याभिधायी भवतु । यस्य किल वाक्यमवितथीकर्तुमेवाहं वनमुपसमागमम् । सत्यधनं हि नः कुलम् । कथं भवानन्यथा प्रवर्तते । तत्सत्वरं निवर्तस्व परिरक्षितुं स्वराज्यम्" इति निरुत्तरमशासत् । तदाज्ञावशंवदो भरतो व्यजिज्ञपत्—"आर्य, तेन हि मम हस्ते निक्षिप्तं तव राज्यं चतुर्दश वर्षान्ते त्वां प्रतिग्राहयितुमिच्छामि । अन्यच्च, प्रसादयतु महमार्यः पादोपभुक्ते इमे पादुके । अत्रैवा-

भिषेकोदकमावर्जयित्वा अनयोर्विधेयस्सन् भवदागमनावधि परिपालयिष्ये भुवनम्" इति ॥

ततः प्रीतेन भ्रात्रा सबहुमानं प्रसादीकृते पादुके गृहीत्वा, समापृच्छ्य च स्नेहविक्लवमाश्रमद्वारावधि विहितानुयात्रं बन्धुजनं, भरतो, "हन्त भोः, अद्यैवास्मि,—

> श्रद्धेयः स्वजनस्य पौररुचितो लोकस्य दृष्टिक्षमः
> स्वर्गस्थस्य नराधिपस्य दयितश्शीलान्वितोऽहं सुतः ।
> भ्रातॄणां गुणशालिनां बहुमतः कीर्तेर्महद्भाजनं
> संवादेषु कथाश्रयो गुणवतां लब्धप्रियाणां प्रियः ॥

इति परितुष्यन्, प्रकामं विशदान्तरङ्गः सुमन्त्राधिष्ठितं रथमारुह्य अयोध्यामभिप्रतस्थे ॥

## (२)

अथ कदाचिद्रहस्याये वनप्रवासे भ्रातुरुद्धातपरम्पराश्रवणेन निस्सहपरीतापप्रदग्धहृदयं साक्रोशनैष्ठुर्यं निजोपालम्भप्रवृत्तं भरतं, भवितव्यतायाः प्राबल्यमुपदर्शयन्ती, तथाऽध्यवसितदैवपारतन्त्र्येणोपहतचेतसो निमित्तमात्रभूतायाः स्वस्या अपराद्धतायां प्रत्याययन्ती च, सानुनयं, सुमन्त्रानुदिता कैकेयीतथमुपन्यास्थचिरकाङ्क्षितोद्घाटनावसरं, निजवरद्वयाऽऽदानप्रवर्तकं, अनन्यथाभवं दशरथस्य शापम् । "पुरा किल मृगयां गतेन महाराजेन

कस्मिंश्चित्सरसि कलशं पूरयमाणो, वनगजबृंहितानुकारिशब्द-समुत्पन्नवनगजशङ्कया विपन्नचक्षुषो महर्षेश्चक्षुर्भूतो मुनितनय-श्शब्दवेधिना शरेण हिंसित । तेन च सत्यभाषिणा महर्षिणा-ऽविपन्नेन पुत्रव्यपायव्यलीकेन प्राणान्परित्यजता शप्तो महाराज —'त्वमप्येष पुत्रशोकाद्विपत्स्यसे," इति तत्र च मामपराधे निक्षिप्य दैवेन पुत्रको रामो वन प्रेषित । तन्मा न राज्यलुब्धा मन्तुमर्हसि । अपरिहरणीयो मुनिशाप पुत्रविवासन विना कथ विरमति । किं च मातुलकुले वर्तमानस्य ते प्रकृतिभूतो विप्रवास इति राम एव प्रव्राजयितव्य आसीत् । यत्किल चतुर्दशदिवसा इति वक्तुकामया पर्याकुलहृदयया चतुर्दशवर्षाणीति मयोक्त तदपि दैवतन्त्रकमेव" इति ॥

तदा तत्सर्वमनूद्य सुमन्त्र पुनर्न्यवेदयत्—'कुमार, वसिष्ठ वामदेवप्रभृतीना सर्वमेतद्विदितमनुमत च" इति । तच्छ्रुत्वा विश्वस्तहृदयो भरतो, "हन्त त्रैलोक्यसाक्षिण खल्वेते । यद्यनुमत तेषा नात्र विचारणाया अवसर । दिष्ट्या अनपराद्धात्र भवती" इत्युक्त्वा भ्रातृवात्सल्यादुत्पन्नमन्यो स्वस्यापराधान् क्षमापयित्वा च मातरमभिववन्दे । अजहाच्च नदादितस्ता प्रत्यन्यथा-ग्रहणेन सुचिरसम्भृत हृदयकालुष्यम् ॥

अथायोध्यारक्षामुपदिश्य निवर्तिते भरते, दक्षिणाशा-विस्तीर्णेष्वरण्यभागेष्वविरलमास्तीर्णानामाश्रममण्डलाना दर्शन-कुतूहलिना, वृद्धोपसेवाहेवाकिना च मनसा, ससीतालक्ष्मणो

दिनोपावर्तिनं तातस्यानुसंवत्सरिकश्राद्धविधिं कल्पविशेषेण स्वस्य च तातस्य च, यथानुरूपं निर्वर्तयितुमाहितचिन्तं मन्त्रयमाणं रामभद्रं, लब्धान्तरो विश्वसनीयं परिव्राजकलिङ्गमङ्गीकृत्यातिथिरिवाभ्यवर्तत ॥

पूजितश्च ताभ्यां निजान्वयश्रुतादिकं वर्णयन् प्रसङ्गेन श्राद्धकल्पेऽभिज्ञत्वमात्मन उपन्यास्यत् । तेन च सञ्जातकुतूहलो राघवः पर्यपृच्छत्—"भगवन्, निवपनक्रियाकाले केन पितृंस्तर्पयामि । विशेषोऽभिधीयताम्" इति । स प्राह—"हिमवतस्सप्तमे शृङ्गे प्रत्यक्षस्थाणुशिरःपतितगङ्गाम्बुपायिनो वैडूर्यश्यामपृष्ठाः पवनसमजवाः काञ्चनपार्श्वा नाम मृगाः प्रतिवसन्ति ।

> यैस्तर्पितास्सुतफलं पितरो लभन्ते
> हित्वा जरां समुपयान्ति हि दीप्यमानाः ।
> तुल्यं सुरैस्समुपयान्ति विमानवास-
> मावर्तिभिश्च विषयैर्न बलाद्ध्रियन्ते ॥"

इति । तच्छ्रुत्वा "तर्हि तानयाहरिष्यामि" इति कृतसंरम्भं राघवं पुनरुवाच कपटकर्मन्दी "अलमतिमनोरथेन । न ते मानुषैर्दृश्यन्त" इति । अथ सुधीरमुदाजहार रामभद्रः—"यदि हिमवान्सौवर्णान्मृगान्न मे दर्शयिष्यति बाणैः क्रौञ्चदारं तं विदारयिष्यामि" इति । तत्क्षण एव विद्युत्सम्पात इव लोचनहरो दूरादाविरभूत्काञ्चनपार्श्वो मृगः । "दिष्ट्या हिमवान्मयि परितुष्टः । अहो तातस्य भाग्यम्" इति मोदमानो रामस्तमुप-

च्छन्दयन्नर्घ्यमादायोपससर्प । मृगस्तु पूजामनवेक्ष्य पुरःपुरो धावन् राघवं सुदूरमाचकर्ष ॥

अथाक्षिगोचरमतिपतिते रामभद्रे, दशाननः स्वरूपं गृहीत्वा भयविह्वलाङ्गीं भर्तारमेव पुनःपुनराक्रोशन्तीं कुररीमिव वृषदंशकस्मीतां हठादाक्रम्य रथेऽवस्थाप्य खमुत्पतितः । तथा ह्रियमाणां जानकीं दृष्ट्वा निजसखस्य दशरथस्यानृण्यमिच्छन् जटायुर्नाम गृध्रराजः "मयि स्थिते क्वयासि" इति तर्जयन्नभिपत्य पापाशयमेनं पक्षाभ्यां विक्षिपन्, तुण्डेन खण्डयन्, नखरैश्च विदारयन्, सक्रोधं रुरोध । रावणस्तु रोषादुद्वृत्तनयनः प्रयुध्यन्तं पतगेश्वरमसिना दक्षिणांसदेशे गाढं प्राहरत् । तेन निकृत्तावयवस्सद्यो गतायुरवनितलमाससाद जटायुः ॥

अत्रान्तरे एकप्लुतातिक्रान्तशरविषयं तमपूर्वहरिणं अनुद्रुत्य विफलश्रमस्सीतापतिस्सचिन्तायासं यावत्प्रतिनिवृत्ते तावत्सीताशून्यमुटजमपश्यत् । अथ प्रत्यासन्नतापसमुखाद्यथावृत्तमधिगत्य, विदीर्यन्निव शोकेन बहु विलपन्, लक्ष्मणेन कथञ्चित्पर्यवस्थाप्यमानः काननभुवमनास्थया विचरन् वनौकसां धाम किष्किन्धामवाप । तत्र च निजाग्रजेन बलिना वालिना सदारापहारं निर्विषयीकृतो हनूमत्प्रभृतिभिः कतिपयैरेव स्निग्धैरुपास्यमानः सुग्रीवो नाम वानरमुख्यो महर्षिशापमहिम्ना वालिनो दुरासदं ऋश्यमूकपर्वतशृङ्गमवाप्तभङ्गः कृच्छ्रेण प्रतिवसति स्म । अथानयोस्तुल्यदुःखयोः परस्परोपकारकृतप्रतिज्ञयोस्सन्धिरघटिष्ट ॥

तदनु तदनुरोधेन तौ निरन्तरोपचीयमानस्निग्धभावौ अतुलभुजबलावलेपं हेममालिनं वालिनं निगृहीतुकामौ नियुद्धाय तमभिमुखीकर्तुं प्राक्रमेताम् । अथ सुग्रीवक्ष्वेलिताकर्णनप्रज्वलितमन्युश्शतमन्युसूनुरवधीरितताराप्रतिषेधवचनो गर्जन्नभिपत्य प्रक्रान्तविनयातिक्रममाक्रम्य विग्रहोद्धुरं सुग्रीवं मुष्टिनिर्घातनिष्पीडितमुद्गीवितासुमकरोत् । ततस्सम्भ्रान्तेन हनुमता तामवस्थां प्रतिबोधितो रामभद्रस्तरुशाखाप्रच्छन्न एव वालिनं सप्तसालीविदारणदारुणमुखस्य शिलीमुखस्य शरव्यतामनैषीत् । स च तेन मर्मसु निहत्य सहसा निपातितः प्रस्रुतरुधिरप्रसेकपिच्छिले भूतले दुस्सहव्यथया कृतपरिसर्पणो धूलीधूसरिताङ्गः पतङ्ग इवासन्नास्तमयस्सीदन् मुमूर्षुरिपुवाचितनामानं राघवमाह्वानभिमुखं भृशमकुत्सयन् । अस्थानोपक्रोशिनं तमुपगम्य रघुवीरः कृपाकुलमनास्समबोधयन् ॥

वागुराछन्नमाश्रित्य मृगाणामिष्यते वधः ।
वध्यत्वाच्च मृगत्वाच्च भवान् छद्मेन दण्डितः ॥

यवीयसो दाराभिमर्शनपातकी वध्य एव भवान्ननु । तेन हि युक्तदण्डानां योग्यमेव कृतमस्माभिः । मद्विहितेन च दण्डेन विगतपाप्मा त्वमनन्तान् लोकानवाप्स्यसि ” इति ॥

अत.परं निरुत्तरो वाली प्रबलानुशयतरलितान्तरङ्गं शोचन्तं सुग्रीवम् “ईदृशो लोकधर्मः” इति समाश्वास्य स्वतनयमङ्गदं तस्य हस्ते निक्षिप्य, “प्रतिगृह्यतामस्मत्कुलधनम्” इति स्ववक्ष-

स्संभुक्तां हेममालाञ्च तस्मै प्रतिपाद्य राघवं प्रसादयित्वा स्वर्गभागी बभूव । ततो यथाविधि तस्य हरिप्रवरस्यौर्ध्वदैहिकं निर्वर्तयित्वा रामलक्ष्मणौ सुग्रीवं किष्किन्धाराज्येऽभ्यषेचयताम् ॥

एवं निस्तीर्णस्वप्रतिज्ञाभरो निर्भरविरहोत्कण्ठाकुण्ठितानुभावो लक्ष्मणाग्रजस्सुग्रीवस्य कृतज्ञतावीरुधः फलदर्शनानुकूलं कालं प्रतीक्षमाणोऽवतस्थे । ततस्तेन वानराधिनाथेन सीताविषयनार्थं सर्वासु दिशासु प्रेषितेषु प्लवङ्गमपुङ्गवेषु, दक्षिणापथप्रवृत्तः कुमारोऽङ्गदो वेलातटमासाद्य सम्पातिमुखाल्लङ्कायां स्थापितां जानकीमवगत्य महाजवं वायुसूनुं हनूमन्तं प्रोत्साह्य रावणराजधानीं प्रविचेतुमुद्योजयामास । स च निरतिशयमहिमा रामकार्यगरिमाणमनुसन्धाय पाथसान्नाथमेकोत्पातेनातिलङ्घ्य लङ्कामवाप ॥

## (३)

अथ निद्राताह्नाथमहसि निशामुखे, दशमुखमन्तरा प्रकुपितकृतान्तभ्रुकुटिभीमवीक्षणस्य प्रथमावतारमार्गादेशक इव, प्रत्यादेशभूतामलकायाः प्रधाननगरीं यातुधानानां, अलक्षितसञ्चारोचितं वपुषा तनूभवन् स हनूमानुल्लङ्घितप्राकारगोपुरः प्रविश्य नवरत्नरचितसुमेरुशृङ्गभङ्गीमनोहरासु प्रासादपरम्परासु

स्वेच्छया विचचार । अन्ततस्समधिगम्य सन्ततोल्लसितलक्ष्मीप्रसादमेदुरं निशाचरेन्द्रप्रासादं, अन्विष्य च दिव्यभोगोचितसामग्रीविशाला विश्रमशाला: निरन्तरप्रत्युप्तरत्नावलीभासमानान् विमानान्, निद्रावशस्रस्तमुत्तानशयानान्तःपुररमणीरमणीयतल्पगर्भान् गर्भागारांश्च, कुत्रापि जनकराजनन्दिनीमप्रेक्षमाण: पवमाननन्दन:, "अहो व्यर्थो मे परिश्रम:" इति विषीदन् याव-दुन्नतामेकं हर्म्यशृङ्गमारुह्य परितः पश्यति तावदविचितचरामदूरस्थां प्रमदवनराजिमलक्षयत् ॥

प्रविश्य च तां कल्पितक्रीडाशैलप्रेक्षणीयां, विचरदण्डजवाचालितदीर्घिकाशीतलितां, परिपश्यन्, कस्यचित्पादपस्य मूलमाश्रित्य स्थितां ध्यानसंवीतहृदयां अनशनक्षामां कातर्यसंगृढस्तनोदरीं एकवेणीधरां दुर्दिनान्तर्गतामिव चन्द्रलेखामारक्षकराक्षसीगणपरिवृतां कामपि विरहव्यथामिव मूर्तिमतीं वरवर्णिनीमपश्यत् । "कथं भवेत्" इति क्षणं विचिकित्समानस्स उपासीदन्तं परिजनकरावलम्बितदीपिकावलिद्योतितमार्गं निसर्गताम्रायताक्षं क्षणदाचरचक्रवर्तिनमुद्वीक्ष्य कोटरान्तरितो भूत्वा वृत्तान्तजिज्ञासुरवतस्थे ॥

तदानीमतिवेलसम्भृतमन्मथोन्मथितहृदय: पौलस्त्यस्तां मानवतीमुपसृत्य बहूनि प्रलोभनानि प्रस्तुवन्ननुकूलयितुं प्रायतत । दाशरथिप्रेष्ठमधिक्षिप्य तृणवदवधीरितोऽपि तया, रामापवादगर्भितैरात्मश्लाघोपन्यासकुत्सितैर्दुःश्रवैर्वचोभिस्तां स निर्लज्जो निरन्तरं

तुतोद । अथ च क्रुद्धा सा पतिदेवता "ननु देवि" इति सचापलमुपासीदन्तं निर्दहन्तीव दृष्टिपातेन तं पापात्मानं "शप्तोऽसि" इत्यवाभर्त्सयत् । अल्पैरप्येभिरक्षरैः प्रतिबद्धतेजा वज्राहत इव क्षुभ्यन् स रक्षःपतिरसद्यो निवर्तयां बभूव ॥

अथ निर्गते रावणे, निद्रामुद्रिताक्षीषु च राक्षसीषु, कोटरादवरुह्य विदितवेदितव्यो मारुतिरसमक्स्युन्मेयं रघुवीरापदानानि गृणन् विनीतो देवीमुपससर्प । विविधशङ्काविकल्पेन प्रथममजातप्रत्ययापि रामपत्नी सुश्लिष्टभाषिणि, सन्निधापिताभिज्ञानाङ्गुलीयके तस्मिन् विमृश्य विश्वासमुपागमत् । तन्मुखेन च वियोगविधुरं, सुग्रीवसाहाय्येन प्रतिपन्नसमरधुरं राघवधुरन्धरमवगत्य समाश्वसितमानसा तमाशीर्भिरभिनन्द्य, भर्त्रे प्राहितयथोचितसन्देशं विससर्ज ॥

ततो हनूमान् निजागमनमन्तरेण रावणं विदितार्थं कर्तुमिच्छन् व्यञ्जयितुकामश्च हरिसेनावीरपराक्रमलवं भञ्जयांबभूव मन्दोदरीमानसोल्लासिनीमशोकवनिकाम् । तेन च मृणालवदुत्पाटितान् सालवृक्षान् मुष्टिना भग्नं दारुपर्वतकं पाणितलाभमृदितानि लतागृहाणि नादमात्रेण विसंज्ञीकृतान् प्रमदवनपालकांश्च दृष्ट्वा भीताः किङ्करराक्षसा महाराजायापूर्वमिमं वृत्तान्तं निवेदयांचक्रुः । तच्छ्रुत्वा इदंप्रथमोपस्थितनिकारस्संमूर्च्छत्क्रोधविकारः पिशिताशनेन्द्रः स वानरग्रहणाय किङ्कराणां सहस्रमाज्ञापयामास । ते तु हनुमता वृक्षैरेव निहत्य व्यापाद्यन्त । अनन्तरागतान् पञ्च-

सेनापतीन् काञ्चनतोरणपरिघेण घातयित्वा मारुतिर्मुष्टिनिष्पेषणेन कुमारमक्षमप्यक्षिणोत् । ततः सक्रोधं निर्गतेनेन्द्रजिता सह चिरं प्रयुद्ध्य स व्यपनीतयुयुत्साकण्डूतिर्निशाचरेन्द्रदर्शन-कौतूहलेन प्रबलास्त्रवर्षिणस्तस्य स्वेच्छया वश्यतामयासीत् । नीतोऽभूच्च पाशैर्बद्धो राक्षसस्सन्निकर्षम् ॥

तत्र च, सुरदानवैर्मनसाप्यचिन्त्यामिमां लङ्कां मामप्यभि-भूय प्रविष्टः किल वानरः । "किमयं त्रैलोक्यविजयगर्वितेन कम्पितकैलासशैलेन दोर्मददुर्ललितेन मया अधिक्षिप्तस्य भगवतो नन्दिनः शापः कपिच्छद्मना मामिदानीमुपाप्तः" इति वितर्का-कुलहृदयं, मैथिलीप्रत्यर्पणमन्तरेण विच्छिन्नप्रार्थनोपक्रमेण विषण्णेन भ्रात्रा विभीषणेन अन्वासितं, राक्षसराजमुपगम्य हनूमान् दूत-समुदाचारमङ्गीकृत्य कुशलमन्वयुङ्क्त । तेन च सावज्ञं कस्त्वं शाखामृग इति पृष्टः पवनसूनुः सुधीरं स्वगोत्रोपन्यासपूर्वक-मात्मानं रामदूतं वर्णयन्, विभीषणानुज्ञातो रामशासनमित्थ-मुदैरयत् ॥

"व्रजशरणमुपेहि शङ्करं वा
प्रविश च दुर्गतमं रसातलं वा ।
शरवरपरिभिन्नसर्वगात्रं
यमसदनं प्रति यापयाम्यहं त्वाम् ॥" इति ।

तच्छ्रुत्वा सगर्वोपहासं प्रस्तुतनिजवीर्यापदानवर्णनं दशकण्ठं, साव-हित्थमित्थमप्राक्षीन्मारुतिः, "एवंविधेन भवता किमर्थं तस्य

प्रच्छन्नं दारापहरणं कृतम् । इति । तमनुमोदमानो राक्षसो-ऽप्यराक्षससत्त्वो विभीषणो निरूपयामास ॥—

अपास्य मायया रामं त्वया राक्षसपुङ्गव ।
भिक्षुवेषं समास्थाय छलेनापहृता हि सा ॥ ९ ॥

इति । सद्यः क्रोधसंरक्तनयनं दृष्ट्वा तु भ्रातरं सानुनयमित्थं स पुनराचचक्षे ॥—

"प्रसीद राजन् वचनं हितं मे
प्रदीयतां राघवधर्मपत्नी ।
इदं कुलं राक्षसपुङ्गवेन
त्वया हि नेच्छामि विपद्यमानम्"॥ १० ॥ इति ।

अथ तदानीमप्यनुक्तग्राहिणं, स्ववीर्यावलेपमूर्च्छितं, "कथं लम्भसटासिंहो मृगेण विनिपात्यते ।" इति कृतमुधाविकत्थनं प्रक्षीणपुण्यं रक्षःपतिं नामग्रहणेन निर्मर्यादं बहु विनिनिन्द हनूमान् । येन प्रदीप्तक्रोधेन, "लाङ्गूलमादीप्य विसृज्यतामयं दूताधम" इति किङ्करानुशासता तेन, "यदि तेऽस्ति धनुः-श्लाघा दीयतां मे रणो महान्" इति राघवाय प्राहितसन्देश-स्मनिरम्यत ॥

अनन्तरं भ्रातुरपरिहार्यया विप्रतिपत्त्याऽतिमात्रं निर्विण्णो विभीषणः पुनस्समुद्बोधयामास—"राजन्नाप्तवचः किन्न शृणोषि । सीतापहरणे न केवलमधर्मः, दुस्तरो बलवद्भिरहश्चोपनिपातितः ।

हन्त सर्वथा रक्षःकुलस्य विनाशोऽभ्यागत इति मन्ये" इति। किन्तु हितमनादृतया विपद्यमानभाग्येन दशग्रीवेण, क्रोधोद्वृत्तारुणविंशतिनयनमुद्वीक्ष्य, "शत्रुपक्षमाश्रितो निर्भयं मामभिभाषमाणो राक्षसाधमोऽयं सद्यो निर्वास्यताम्" इति धिक्कृतस्स धर्मात्मा "एवं प्रशासितोऽहमनपराद्धः स्वयमेव प्रयामि" इत्युक्त्वा रामपादमूलमाशिश्रयिषुः निर्जगाम॥

उत्पत्य च गगनमार्गेण वाराशिमुल्लङ्घ्य प्रत्यागतहनूमदावेदितवृत्तान्तमावेलातटमागत्य पुरतो दुश्शकप्रसरत्वात् तत्रैवावस्थापितस्कन्धावारं वानरानीकपारावारमुपासदत्। राक्षसत्वादाशङ्कनीयशत्रुभावं तमापतन्तमुद्वीक्ष्य तन्निग्रहार्थं कृतसम्भ्रमेषु वानरवीरेषु, विभीषणस्सञ्जातप्रत्यभिज्ञं हनूमन्तमुपसृत्य, "मदागमनं देवाय निवेदय" इति प्रार्थयामास। स च हृष्टो राघवं व्यजिज्ञपत्—

"राजंस्त्वत्कारणादेव भ्रात्रा निर्विषयीकृतः।
विभीषणोऽयं धर्मात्मा शरणार्थमुपागतः"॥ इति।

संश्रितवत्सलो दाशरथिर्लक्ष्मणेन तमानाय्य प्रतिनन्द्य च, "अद्य प्रभृति मद्वचनाल्लङ्केश्वरो भव" इत्यनुजग्राह॥

दिष्ट्या विभीषणागमनेन कार्यसिद्धिमाशंसमानो रघुपतिस्तं, सागरतरणे कमुपायं पश्यसीत्यपृच्छत्। तेन च, "यदि मार्गं न ददाति समुद्रो दिव्यमस्त्रं तावद्विस्रष्टुमर्हति देव" इति

विज्ञापिते रामे तदनुतिष्ठति, जलमध्यात्सरभसं वरुणः स्वयमुदतिष्ठत् । तत्प्रसादेन क्षणाद्राघभाजं सलिलनिधिंससैनिकमुत्तीर्य रघुवीरो लङ्कासीम्नि सुवेलकटके कटकं स्थापयामास ॥

अथ क्रमान्निवेश्यमानासु सेनासु तत्तद्वृन्दपरिग्रहेषु परीक्ष्यमाणेषु, पुस्तकप्रामाण्यात्कुतश्चिदप्यविज्ञायमानौ द्वौ वनौकसौ गृहीतौ । विभीषणो निपुणं निरीक्ष्य, "राक्षसेशमन्त्रिणौ शुकसारणावेतौ रन्ध्रान्वेषिणौ" इति तयोर्याथार्थ्यं विभावयामास । तौ च दयानिधी रामः पौलस्त्याय, "रणातिथिस्त्वां द्रष्टुमहमागत" इति ग्राहितसन्देशौ विमोचयामास ॥

अथ प्रावर्तत पुङ्खानुपुङ्खप्रहितनिरन्तरशरवर्षसंपादितगाढदुर्दिनोदयानामाशराणां, निजभुजोत्पाटितानेकानोकहनिवहशैलशृङ्गोत्करमात्रप्रहरणानाञ्च वानरानीकानां निरवकाशीकृतगगनाभोगस्तुमुलसंपरायः । तत्र चोत्पुच्छकर्णवानरप्रवरगृहीतकण्ठनिष्पेषणोद्गलितनयनविकृतसुरारक्षोगणाकीर्णः, क्रुद्धनक्तञ्चरकरपरिभ्रमितकृपाणिकाशतसम्पातप्रविदीर्णोद्भटवानरभटः, प्रवहदसृक्पूरवाह्यमानविपन्नहरिरक्षःकुणपराशिबीभत्सः, पश्यतामनिमिषमनिमिषतां प्रतिभयतामवहत्समराजिरः । तदानीमनपेक्षितबन्दीग्रहसाहसमप्सरोगणस्वयंवरणोत्सवसंपादकं वीरस्वर्गमापुरसङ्ख्यास्सङ्ख्ये नैर्ऋतवीराः ॥

अथ विपद्यमानाभ्युदये राक्षसकुले, समरचकितासु पराङ्मुखतया पलायमानासु पृतनासु, निहतेषु प्रहस्तनिकुम्भकुम्भकर्ण-

प्रमुखेषु मुख्यपुरुषेषु, व्यपयान्त्याञ्च स्वस्मात् आवैश्रवणनिरासात् स्वायत्तीकृताया विजयश्रिया, परित्रातव्यभूतनिजात्मापि सचिव-वचास्यनपेक्ष्य दुर्व्यवस्थितनियतिपारतन्त्र्येण मुह्यन्, वीरमानी दशवदनो, मदनावेशदाहपरिध्वस्तमतिस्सीतामृगतृष्णिकामेव भूयो-ऽन्वधावत् । मिथ्या तां मोहयिष्यन्स दुरात्मा, रामलक्ष्मणयो-श्शिर प्रतिकृती आनाय्य, "अयि मुग्धे, अद्यापि किमनु-बध्नासि, गतायुषि तापसहतके तस्मिन् भावम् । पश्यैमे कुमारे-णेन्द्रजिता हतयोस्तयोर्मानुषपोतयोश्शिरसी" इति दर्शयन् दयि-तागमनवृत्तान्तश्रवणदरोच्छ्वसित तस्या पतिव्रताया मानस निर्दय निर्ममन्थ ॥

अत्रान्तरे रामेण निहतमिन्द्रजितमख्यात् सभ्रान्त कोऽपि किङ्कर । तदाकर्णनव्यलीकपरिभूतो लङ्केश्वरस्तथा विव्यथे, यथा स स्वपरिजनानामप्यनुकम्पनीयो बभूव । विललाप च सन्ताप-विह्वल —"किमिदानीमनर्थहेतुभूतया सीतया, त्रैलोक्यविजयेऽपि विफलया चपलया श्रिया च । किं भो कृतान्तहतक ! सुत-प्रणाशपरिदीने मयि अद्यापि कातरोऽसि । हा धिक् !

इदानीमपि निस्नेहो वत्सेनेन्द्रजिता विना ।
कष्ट कठोरहृदयो जीवत्येष दशानन ॥ १२ ॥ इति ।

विलपश्च मूर्च्छित पपात भूपृष्ठे ॥

तदनु निजाभियुयुत्सु रोषेणाभिपतन्त राघव किङ्करमुखा-च्छ्रुत्वा स प्रज्वलितक्रोधो मूर्तिमानिव वीरो रस, "क्वासि

कासि" इति समुद्यतासिस्सहसोदतिष्ठत् । उत्थाय च, "रे रे क्षुद्रतापस, पश्यन्तु त्वामद्य निराशा गीर्वाणाः, वज्रीभकुम्भतटपाटनकठोरधारस्यास्य कृपाणस्य क्रोधोपहारतां नीतम्" इति जगर्ज । पुनस्सीतां निरूप्य, साक्रोशावेगं, "अस्याः कारणेन किलैवायमनर्थः" इति तां हन्तुकामः परिपतन्नासन्नपरिजनेनानिवार्यत । ततस्स पापात्मा सूतोपनीतं स्यन्दनमास्थाय सङ्ग्रामावतरणत्वरया निर्ययौ ॥

ततस्त्रिलोकी-जेगीयमानपरस्परवीरापदाननिकषायिते तस्मिन्महति युद्धे, सरोपौत्सुक्यं निभृतं निरीक्षमाणेषूभयपक्षीयेषु लीलयैव द्वेधाकृत्य प्रतिपक्षप्रहितां कालान्तकोपमां शक्तिं, तत्क्षणमिन्द्रेणोपप्रेषितं रथमारूढेन, निरन्तरबाणवर्षावरुणाराातिस्यन्दनहयध्वजादिना प्रळयसूर्यदुर्निरीक्ष्येण, अमोघवेधं वेधसो दिव्यमन्त्रं प्रयुञ्जानेन, जिताशेषरथिना दाशरथिना निकृत्तदशशिरःपतनसमकालाभिवृष्टसुमनस्सुमनोवृष्टिमेदुरमुत्सादितो रावणः । सद्यस्तद्वचनाद्विभीषणश्च लङ्कापतिर्बभूव ॥

एवं स्ववीर्यमहिम्ना निहत्य युधि त्रैलोक्यविद्रावणं रावणं, सद्भिर्निर्वेशिनश्च भीमकर्मणो रक्षोगणान्, अराक्षसवृत्तेर्विभीषणस्याभिषेकेण कृतकृत्यो राघवश्शत्रुकुलनिवासादनुभूतानल्पदुःखां सीतामाश्वासयितुकामस्तद्दर्शनमनुचिन्तयामास ॥

तदा विभीषणः प्रविश्य स्वयमेव कृतोपसर्पणां देवीं राघवाय न्यवेदयत् । रामस्तु जनापवादपरिजिहीर्षया प्रकटमित्थ-

प्रमुखेषु मुख्यपुरुषेषु, व्ययवान्त्याश्च स्वस्मात् आवैश्रवणनिरासात् स्वायत्तीकृतायां विजयश्रियां, परित्रातव्यभूतनिजात्मापि सचिववचांस्यनपेक्ष्य दुर्व्यवस्थितनियतिपारतन्त्र्येण मुह्यन्, वीरमानी दशवदनो, मदनावेशदाहपरिध्वस्तमतिस्सीतामृगतृष्णिकामेव भूयोऽन्वधावत्। मिथ्या तां मोहयिष्यन्स दुरात्मा, रामलक्ष्मणयोः शिरःप्रतिकृती आनाय्य, "अयि मुग्धे, अद्यापि किमनुबध्नासि, गतायुषि तापसहतके तस्मिन् भावम्। पश्यैमे कुमारेणेन्द्रजिता हतयोस्तयोर्मानुषपोतयोश्शिरसी" इति दर्शयन् दयितागमनवृत्तान्तश्रवणदरोच्छ्वसितं तस्याः पतिव्रताया मानसं निर्दयं निर्ममन्थ॥

अत्रान्तरे रामेण निहतमिन्द्रजितमख्यात् संभ्रान्तः कोऽपि किङ्करः। तदाकर्णनव्यलीकपरिभूतो लङ्केश्वरस्तथा विव्यथे, यथा स स्वपरिजनानामप्यनुकम्पनीयो [illegible]। विललाप च सन्ताप-

कासि" इति समुद्यतासिरसहसोदविष्ठत् । उत्थाय च, "रे रे क्षुद्रतापस, पश्यन्तु त्वामद्य निराशा गीर्वाणाः, वज्रीभकुम्भतटपाटनकठोरधारस्यास्य कृपाणस्य क्रोधोपहारतां नीतम्" इति जगर्जे । पुनस्सीतां निरूप्य, साक्रोशावेगं, "अस्याः कारणेन किलैतावाननर्थः" इति तां हन्तुकामः परिपतन्नासन्नपरिजनेनानिवार्यत । ततस्स पापात्मा मूतोपनीतं स्यन्दनमास्थाय सङ्ग्रामावतरणत्वरया निर्ययौ ॥

ततस्त्रिलोकी-जेगीयमानपरस्परवीरापदानानिकषायिते तस्मिन्महति युद्धे, सरोपौत्सुक्यं निभृतं निरीक्षमाणेपूभयपक्षीयेषु लीलयैव द्वेधाकृत्य प्रतिपक्षप्रहितां कालान्तकोपमां शक्तिं, तत्क्षणमिन्द्रेणोपप्रेषितं रथमारूढेन, निरन्तरबाणवर्षावरुणारातिस्यन्दनहयध्वजादिना प्रलयसूर्यदुर्निरीक्ष्येण, अमोघवेधं वेधसो दिव्यमस्त्रं प्रयुञ्जानेन, जितापरथिना दाशरथिना निकृत्तदशशिरः-पतनसमकालाभिवृष्टसुमनस्सुमनोवृष्टिमेदुरमुत्सादितो रावणः । सद्यसद्वचनाद्विभीषणश्च लङ्कापतिर्बभूव ॥

एवं स्ववीर्यमहिम्ना निहत्य युधि त्रैलोक्यविद्रावणं रावणं, तदभिनिवेशिनश्च भीमकर्मणो रक्षोगणान्, अराक्षसवृत्तेर्विभीषणस्याभिषेकेण कृतकृत्यो राघवदशत्रुकुलनिवासादनुभूतानल्पदुःखां सीतामाश्वासयितुकामस्तद्दर्शनमनुचिन्तयामास ॥

तदा विभीषणः प्रविश्य स्वयमेव कृतोपसर्पणां देवीं राघवाय न्यवेदयत् । रामस्तु जनापवादपरिजिहीर्षया प्रकटमित्थ-

प्रमुखेषु मुख्यपुरुषेषु, व्यपयान्त्याञ्च स्वस्मान् आवैश्रवणनिरासात् स्वायत्तीकृतया विजयश्रिया, परित्रातव्यभूतनिजात्मापि सचिववचास्यनपेक्ष्य दुर्व्यवस्थितनियतिपारतन्त्र्येण मुह्यन्, वीरमानी दशवदनो, मदनावेशदाहपरिध्वस्तमतिस्सीतामृगतृष्णिकामेव भूयोऽन्वधावत्। मिथ्या तां मोहयिष्यन्स दुरात्मा, रामलक्ष्मणयोश्शिर प्रतिकृती आनाय्य, "अयि मुग्धे, अद्यापि किमनुध्यासि, गतायुषि तापसहतके तस्मिन् भावम्। पश्येमे कुमारेणेन्द्रजिता हतयोस्तयोर्मानुषपोतयोश्शिरसी" इति दर्शयन् दयितागमनवृत्तान्तश्रवणदरोच्छ्वसित तस्या पतिव्रताया मानस निर्दय निर्ममन्थ॥

अत्रान्तरे रामेण निहतमिन्द्रजितमख्यात् सम्भ्रान्त कोऽपि किङ्कर। तदाकर्णनव्यलीकपरिभूतो लङ्केश्वरस्तथा विव्यथे, यथा स स्वपरिजनानामप्यनुकम्पनीयो बभूव। विललाप च सन्तापविह्वल —"किमिदानीमनर्थहेतुभूतया सीतया, त्रैलोक्यविजयेऽपि विफलया चपलया श्रिया च। किं भो कृतान्तहतक! सुतमरणाग्निपरिदीने मयि अद्यापि कातरोऽसि। हा धिक्!

इदानीमपि निस्नेहो वत्सेनेन्द्रजिता विना।
कष्टं कठोरहृदयो जीवत्येष दशानन ॥ १० ॥ इति।

विलपंश्च मूर्च्छित पपात भूपृष्ठे॥

तमनु निजाभियुयुत्सु रोषेणाभिपतन्त राघव किङ्करमुखाच्छ्रुत्वा स प्रज्वलितक्रोधो मूर्तिमानिव वीरो रस, "क्वासि

कासि" इति समुद्यतासिस्सहसोदतिष्ठत् । उत्थाय च, "रे रे क्षुद्रतापस, पश्यन्तु त्वामद्य निराशा गीर्वाणाः, वज्रीभकुम्भतटपाटनकठोरधारस्यास्य कृपाणस्य क्रोधोपहारतां नीतम्" इति जगर्ज । पुनस्सीतां निरूप्य, साक्रोशावेगं, "अस्याः कारणेन किलैतावाननर्थः" इति तां हन्तुकामः परिपतन्नासन्नपरिजनेनानिवार्यत । ततस्स पापात्मा सूतोपनीतं स्यन्दनमास्थाय सङ्ग्रामावतरणत्वरया निर्ययौ ॥

ततस्त्रिलोकी-जेगीयमानपरस्परवीरापदाननिकषायिते तस्मिन्महति युद्धे, सरोषौत्सुक्यं निभृतं निरीक्षमाणेषूभयपक्षीयेषु लीलयैव द्वेधाकृत्य प्रतिपक्षप्रहितां कालान्तकोपमां शक्तिं, तत्क्षणमिन्द्रेणोपप्रेषितं रथमारूढेन, निरन्तरबाणवर्षावरुणारातिस्यन्दनहयध्वजादिना प्रळयसूर्यदुर्निरीक्ष्येण, अमोघवेधं वेधसो दिव्यमस्त्रं प्रयुञ्जानेन, जिताशेषरथिना दाशरथिना निकृत्तदशशिरःपतनसमकालाभिवृष्टसुमनस्सुमनोवृष्टिमेदुरसुस्ताविते रावणः । सद्यस्तद्वधनाद्विभीषणश्च लङ्कापतिर्बभूव ॥

एवं स्ववीर्यमहिम्ना निहत्य युधि त्रैलोक्यविद्रावणं रावणं, तदभिनिवेशिनश्च भीमकर्मणो रक्षोगणान्, अराक्षसदृत्त्वेर्विभीषणस्याभिषेकेण कृतकृत्यो राघवश्शत्रुकुलनिवासादनुभूतानल्पदुःखां सीतामाश्वासयितुकामस्तद्दर्शनमनुचिन्तयामास ॥

तदा विभीषणः प्रविश्य स्वयमेव कृतोपसर्पणां देवीं राघवाय न्यवेदयत् । रामस्तु जनापवादपरिजिहीर्षया प्रकटमित्थ-

माज्ञापयामास । "विभीषण, न मां द्रष्टुमर्हति रजनिचरात्मर्श-जातकलङ्का, इक्ष्वाकुकुलकीर्तेः कालुष्यहेतुभूता जानकी । तत्रैव तावत्तिष्ठतु" इति । सीतापक्षपातेन प्रसादार्थीनि तन्निर्बन्ध-वचनानि च निर्दयमवधीरयामास ॥

एवं धिक्कृतमात्मानं विज्ञाय मानवती जनकयजनसंभवा, विमुक्तजीवितप्रत्याशा, अग्निप्रवेशकृतनिश्चया भर्तुरनुज्ञां प्रति-पालयामास । अनुज्ञाता च तेन विकसितमुखी हंसीव पद्मवन-मनिर्विण्णा विभावसुमविक्षन् । तदानीमाश्चर्यमाश्चर्यमिति चिन्त्यमा-माणे द्रष्टृलोके रामस्सद्योजातानुशयो लक्ष्मणं सहसा तां साहसा-न्निवारयितुमादिदेश । किन्त्वेतावतैव सा पतिदेवता, ज्वलनं प्रविष्टा शीतसुखस्पर्शमादधतस्तस्मात् कनकमालेव वर्धितप्रभा निर्विकारं निरमज्जन् । तां च स्वयमेव भगवान् हव्यवाहन-स्समादाय रावणान्तकमभिवर्तमानो व्यजिज्ञपन्—

"इमां गृह्णीष्व राजेन्द्र सर्वलोकनमस्कृताम् ।
अपापामक्षतां शुद्धां जानकीं पुरुषोत्तम ॥ १३ ॥

इमां भगवतीं लक्ष्मीं जानीहि जनकात्मजाम् ।
मा भवन्तमनुप्राप्ता मानुषीं तनुमाश्रिता" ॥ १४ ॥

इति । राघवस्सप्रमोदं मैथिलीमङ्गीकृत्य, "अस्याश्शुद्धिं जानतापि मया लोकप्रत्ययार्थमेव नैष्ठुर्यमित्थमाविष्कृतम्" इति वैश्वानर-माश्वासयामास ॥

तदनु समग्रैस्सिद्धविद्याधरगन्धर्वाप्सरःप्रभृतिभिः देवैः विजयवादिभिः गीतनृत्तादिभिः पुष्पवृष्ट्या चाभिनन्दितमङ्गलो, दशरथानुमत्या च वैरेवाभिषिक्तः पृथिवीराज्ये, सीतया सह पुष्पकमारुह्य सबन्धुमित्रो रघुपुङ्गवस्साकेताभिमुखं प्रतस्थे । मध्येमार्गमवतीर्य जनस्थाने कुलपतिसपर्याकल्पितविश्रमो चिरचरितचरमाश्रमपदं सीतया सह सस्नेहानुसरणमनुभवन् स निर्वृतो यावत्तिष्ठति, तावत् आसीताहरणोदन्तश्रवणात् अग्रजसाह्यार्थं समाहृतप्रभूतसेनासमुदयानुकर्षमन्थरं प्रसरन्नुररीकृतलङ्काभियानो भरतस्तं देशमनुप्राप्तो भ्रात्रा समगच्छत ॥

तत्र च बन्धुजनाभिनन्दितस्सीतापतिः कैकेयीवचनात् भरतप्रत्यर्पितां राज्यधुरमङ्गीकृत्य वसिष्ठवामदेवादिभिर्महर्षिभिः प्रकृतीः पुरस्कृत्य यथाविधि निर्वर्तिताभिषेकमङ्गळः पुष्पकेणैव सर्वैस्समुपेतस्साकेतमवाप । अथाधिवसन्निक्ष्वाकुराजधानीमप्रतिहतशासनः पावनापदानस्स नक्तञ्चराभ्युदयधूमकेतुरापादितत्रिलोकीभद्रो रामभद्रस्सुचिरं व्यलासीत् ॥

इति श्रीरामचरितम् ।

इति श्रीमन्महालिङ्गकविकृतिषु संस्कृतकथासारे
द्वितीयो भागस्सम्पूर्णः ।

 ॥ समाप्तश्चायं पूर्वार्धः ॥ 

# भारतीयश्लोकानुक्रमणिका ॥

## Index of Verses quoted from the Originals

**(for Parts I & II)**



# THE BHASAKATHASARA.

## GLOSSARY.

### PART I.

### ॥ बालचरितम् ॥

| Page. | Line. | Word. | Meaning |
|---|---|---|---|
| 1 | 3 | उदार | = beantiful. |
| ,, | 11 | संपत्तिः | = prosperity. |
| 2 | 11 | देवरूपिणी | = with celestial appearance; or who was a divine incarnation. |
| ,, | 12 | विडम्बना | = disguise. |
| ,, | 15 | उद्दाम | = furious; dreadful. |
| ,, | 17 | आनकदुन्दुभिः | = Vasndera. |
| 3 | 19 | प्रतिरूपकः | = corresponding; a substitute. |
| 4 | 10 | मोचयति | = loosens; flings away; dismisses. |
| ,, | 10 | आघट्टयति | = shakes (here, draws up). |
| ,, | 15 | अनु चरितुं | = to follow suit. |
| 5 | 10 | भर्त्सनं | = reproach or threat. |
| ,, | 11 | समाधातुं | = to make steady; to get composure. |

| Page | Line | Word | Meaning |
|---|---|---|---|
| 5 | 14 | प्रतिभासः | = appearance; illusion. |
| 6 | 14 | आवभार | = possessed fully, bore up. |
| ,, | 16 | कुल | = family, house or abode of family. |
| ,, | 17 | विभूति | = magnificence. |
| 7 | 8 | केलिसब्रह्मचारिन् | = associates in (his) pranks or wanton jokes. |
| ,, | 9 | दुर्नय | = misconduct. |
| ,, | 10 | निरूपित | = investigated, ascertained or proved. |
| ,, | 11 | अभिद्रोग्धुं | = seeking to assail or do injury. |
| ,, | 18 | यूथ्य | = belonging to a group or troop. |
| 8 | 11 | पल्लवमात्रेण | = just as long as a twig or a blade of grass. |
| ,, | 16 | दुष्प्रसह | = irresistible, terrible. |
| ,, | 20 | समर्थ्य | = having deliberated, reconciling within himself. |
| 9 | 9 | मन्थर | = inactive; stupid. |
| ,, | 12 | अभिमर्श | = assault, outraging |
| ,, | 17 | क्षमापयितुं | = to beg pardon or forgiveness. |
| ,, | ,, | व्यादिशन् | = pointing out as a plea: putting forward as an excuse |
| 11 | 10 | मण्डलानि | = the multitudes or the troops collecting around. |
| ,, | 12 | अभिनन्दन | = congratulating, praising. |

## ॥ मध्यमव्यायोगः ॥

| Page. | Line. | Word. | Meaning. |
|---|---|---|---|
| 12 | 9 | निसर्गः | = giving up : abandoning. |
| ,, | 10 | अभिसन्धिः | = object ; aim ; intention. |
| 13 | 5 | समयः | = a stipulation or a compact. |
| ,, | 16 | मध्यमः | = It is well-known that पाण्डवमध्यम denotes Arjuna and cannot be applied to Bhima. But here it should be noted that an important dramatic purpose is served by this deviation from authority. |

The word मध्यम is repeated by Bhima for the sake of emphatic demonstration eight times, and is intended, I think to denote variously, "one of those"; "among"; "the middle-born"; "the intervener"; "an impartial person"; "the central gem, etc."

In the sense of "an impartial person" I venture to think the word suggests यम the destroyer who is called समवर्तिन् ।

| Page. | Line. | Word. | Meaning. |
|---|---|---|---|
| 15 | 4 | प्रतिपद्य | = having assented to or complied with. |
| ,, | 8 | नियुद्धं | = close personal combat. |
| ,, | 18 | मुखरागः | = the complexion of the face. |
| ,, | 19 | चापलं | = rash conduct ; inconsiderate act. |
| ,, | 22 | सुपर्यवसन्नः | = terminated happily ; ended well. |

## ॥ पाञ्चरात्रम् ॥

| Page | Line. | Word. | Meaning. |
|---|---|---|---|
| 16 | 4 | आमोदितुं | = to rejoice. |
| ,, | 4 | अन्तरेण | = except. |
| ,, | 6 | सभाजित | = paid respects to ; congratulated. |
| ,, | 9 | अवलेपपारुष्य | = haughty cruelty, i.e , cruelty due to his pride. |
| 17 | 1 | वाह्यः | = should be taken along or brought round. |
| 19 | 2 | अवष्टम्भ | = haughtiness. |

## ॥ दूतवाक्यम् ॥

| Page | Line. | Word. | Meaning. |
|---|---|---|---|
| 21 | 2 | धर्म्यं दायाद्यं | = lawful or legitimate inheritance. |
| ,, | 4 | विप्रकृत | = offended or insulted. |
| ,, | 4 | हठः | = violence or force. |
| ,, | 10 | काञ्चुकीयः | = a door-keeper ; or probably, one of the chamberlain family. (The name is taken from the text of Bhasa.) |
| 22 | 14 | संक्षोभयिष्यन् | = with a view to provoking or irritating him. |
| ,, | 18 | प्रतिजानन् | = asserting. |
| 23 | 7 | कुहक | = a cheat ; rogue or a juggler. |

## ॥ दूतघटोत्कचम् ॥

| Page | Line. | Word. | Meaning. |
|---|---|---|---|
| 24 | 10 | अकुत्सयत् | = condemned or censured. |
| ,, | 13 | प्रणुन्नः | = repeatedly urged or to do a thing ; pressed forward. |

| Page | Line | Word | Meaning |
|---|---|---|---|
| 25 | 4 | महतीं सम्भावनामवधीरयन् | repulsing his high esteem or supposition |
| ,, | 7 | अमर्षित | = unforgiving, indignant |
| ,, | 11 | अवभर्त्सित | = derided, scoffed at अव indicates depreciation |
| ,, | 14 | व्यवसाय | = resolve |
| ,, | 17 | पर्यवस्थापयन् | = consoling him |
| ,, | 18 | व्यूह | = a military array |
| ,, | 18 | सयोपयित्वा | = having brought together, prepared or arranged |

## ‖ कर्णभारः ‖

| Page | Line | Word | Meaning |
|---|---|---|---|
| 27 | ,, | कर्णभार | = Karna's toil, burden or responsibility |
| ,, | 6 | तुमुलीभूत | = when it was raging fiercely |
| 28 | 8 | अश्वौघ | = a number of horses or cavalry |
| ,, | 11 | अपर्याप्त | = unlimited |
| ,, | 21 | दानशौण्डीर | = one who takes high pridə' in giving whatever is asked for |
| 29 | 1 | विपर्यस्यति | = undergoes change |
| ,, | 3 | निकृत्य | = having torn off or cut asunder |
| ,, | 7 | किरीटिमान् | = one who has Arjuna on his side (as his son) |
| ,, | 12 | प्रदिष्टा | = granted, conferred upon despatched |

## ‖ ऊरुभङ्गः ‖

| Page | Line | Word | Meaning |
|---|---|---|---|
| 30 | 2 | उड्डामर | = terrific |
| ,, | 6 | समन्तपञ्चक | = a sacred place in or near Kurukshetra |

| Page | Line | Word | Meaning |
|---|---|---|---|
| 31 | 3 | दुर्योधनापेक्षया | = out of regard for, or for the sake of, Duryodhana. |
| ,, | 7 | रणाभिसन्धि | = terms properly to be observed in warfare. |
| ,, | 12 | तपस्विन् | = helpless, pitiable. |
| ,, | 15 | प्रतिज्ञावसिते | = means अवसितप्रतिज्ञे* । |

* It has not been deemed necessary to correct to grammatical precision the lapses occurring in the verses quoted from the text of Bhasa.

| Page | Line | Word | Meaning |
|---|---|---|---|
| ,, | 17 | आत्मनिर्वाहिन् | = who saved himself . |
| 32 | 5 | अन्वास्ते स्म | = did attend ; followed closely. |

---

PART II

## ॥ श्रीरामचरितम् ॥

### (१)

| Page | Line | Word | Meaning |
|---|---|---|---|
| 36 | 2 | वय स्थ | = youthful, grown up. |
| ,, | 9 | नन्दिपटह | = a kettle drum sounded on occasions of joy. |
| ,, | 9 | भद्रासन | = a throne or a splendid chair of State. |
| ,, | 10 | पुष्परथ | = a carriage for travelling for pleasure (but not for war) |
| 37 | 12 | नेपथ्य | = dress , apparel, particularly of actors |
| ,, | 12 | अवदातिका | = Sita's maid. |
| 38 | 6 | शुल्के विपणित | = transacted in the marriage settlement |
| ,, | 11 | मूर्च्छित | = violent or sensible |

| Page | Line | Word | Meaning |
|---|---|---|---|
| 38 | 16 | अनुसूत्रित | = strung along with or linked to closely |
| ,, | 17 | प्रसाधित | = dressed, decorated |
| ,, | 18 | अवनेक्षित | = fit to protect a kingdom or *not one who could properly* or rightly be sent to the forest or again, unaccus*tomed to forest life* |
| 39 | 8 | सीता कौतुकवर्धन श्रद्धया | with an intimate desire to = animate or rear the mirthful or sportive eagerness *of Sita* |
| 40 | 1 | कार्पण्यमुद्वहन् | = suffering or experiencing wretchedness |
| ,, | 1 | अवस्कन्दिन् | = attacking, assailing |
| ,, | 11 | सङ्गर | = promise undertaking |
| 41 | 8 | दुराग्रह | = foolish obstinacy, pertinacity |
| ,, | 11 | सावेगाक्रोश | = crying out or reviling in excitement |
| ,, | 19 | दृढमकल्य | = seriously ill |
| 42 | 7 | दिलीप etc | = The order of Dilipa Raghu, and Aja, is not warranted by the puranas nor by the Ramayana, but is given by Kalidasa and Bhasa alone in literature |
| 44 | 7 | निजाग्रज | = Bharata is assumed to be the younger brother of Lakshmana, probably be*cause he was the son of* the youngest of the queens |

| Page | Line. | Word | Meaning |
|---|---|---|---|
| | | | but there is no warrant for this in the Ramayana |
| 44 | 14 | इक्ष्वाकु | = a descendant of Ikshwaku |
| | | | **(२)** |
| 45 | 12 | उद्घात | = jolting, (figuratively) hardships and obstructions, non smooth career in the forests |
| , | 13 | परीताप | = agony, anguish, grief |
| ,, | 13 | साक्रोशनैष्ठुर्यं | = with harsh or smart blaming or with abusive heartlessness |
| ,, | 16 | प्रत्याययन्ती | = convincing (him), leading him to the conviction |
| ,, | 16 | अनूदित | = seconded or supported by |
| 46 | 11 | दैवतन्त्रक | = due to subservience to destiny |
| ,, | 15 | वात्सल्य | – fond affection or partiality for |
| ,, | 21 | ऐवाकि | = ardently desirous of ; eager for |
| 47 | 2 | नान्दीमुखोपहार | = a sacrifice offered (to certain manes called Nandimukhas) preliminary to any observance, (here figuratively) |
| ,, | 5 | निर्हरण | = rooting up, extirpation |
| ,, | 6 | अन्तरा सीमन्तित | = marked or divided here and there on the way |
| ,, | 12 | प्रधर्षण | = outrage, ill-treatment, insult. |

| Page. | Line. | Word | Meaning |
|---|---|---|---|
| 47 | 15 | प्रमाय | = slaughter, destruction |
| ,, | 17 | अभिनिवेशिन् | = adhering or clinging to, fixing on, becoming intent upon |
| ,, | 17 | तर्ष | = thirst |
| ,, | 18 | औपयिक | = a means, an expedient, a remedy. |
| ,, | 21 | निकषा | = closely, near. |
| 48 | 1 | कल्प | = a prescribed alternative, optional rule or sacred precept. |
| ,, | 1 | विशेष | = superior, choice. |
| ,, | 3 | विश्वसनीय | = capable of inspiring confidence |
| ,, | 5 | श्रुत | = Holy learning or learning in general |
| ,, | 9 | श्याम | = dark blue. |
| ,, | 16 | कपटकर्मन्दिन् | = pseudo ascetic. |
| 49 | 4 | विह्वल | = agitated perturbed |
| ,, | 4 | वृषदंशक | = a cat |
| ,, | 8 | विक्षिपन् | = throwing about, shaking to and fro |
| ,, | 16 | अनास्थया | = indifferently |
| ,, | 18 | निर्विषयीकृत | = deprived of territory or realm |
| 50 | 5 | विग्रहोद्दुर | = intrepid or firm in fight or battle |

(३)

| Page. | Line. | Word | Meaning |
|---|---|---|---|
| 51 | 13 | अन्तरेण | = with regard to. |
| ,, | 15 | [illegible] | = that which eclipses |

| Page. | Line. | Word | Meaning |
|---|---|---|---|
| 52 | 2 | मेदुर | = full of |
| ,, | 3 | विशाल | = rich, abounding in |
| ,, | 4 | विमान | = a palace with seven stories or *a splendid hall* |
| ,, | 5 | गर्भागार | = female apartment |
| ,, | 11 | संवीत | = overwhelmed, shut in |
| 53 | 10 | वियोग विधुर | – miserable or distressed through separation |
| ,, | 10 | धुर् | – task or responsibility |
| 54 | 21 | सावहित्थ | – with a concealed feeling or dissimulation |
| 56 | 5 | प्रशासित | = punished |
| 57 | 4 | तत्तद्वृन्द etc | = when the constituents or recruits of the various divisions under the command of the respective captains were being checked |
| ,, | 5 | पुस्तकप्रामाण्यात् | – from the authority of the register of names |
| ,, | 11 | दुर्दिनोदय | = appearance of a cloudy day, or rise of a thick darkness |
| 58 | 11 | व्यलीक | = pain, sorrow, grief |
| 59 | 8 | निकष | = a touchstone, test |
| ,, | 9 | निभृत | = motionlessly, silently. |
| ,, | 11 | अवदरण | = broken to pieces |
| 60 | 8 | अनिर्विण्णा | – not being overcome grief |

## ERRATA for Vol. I.

## पूर्वार्धस्य शुद्धाशुद्धपत्रिका ॥

| ge. | Line. | For. | Read. |
|---|---|---|---|
| 4 | 16-17 | आयुधस्सुद | आयुध सु- |
| 5 | 19 | प्रबुघ्यन् | प्रबुद्ध. |
| 6 | 20 | उल्लास | उल्लास |
| 10 | 3 | तत्क्षणादागतेन | तत्क्षणागतेन |
| 12 | 6 | लब्ध | लब्धः |
| 14 | 5 | निभल्य | निभाल्य |
| 15 | 17 | भृष्ट | भ्रष्ट |
| 23 | 15 | वरायुधान् | वरायुधानि |
| 30 | 2 | प्रस | प्रास |
| 37 | 2 | किमपि | किमपि |
| 43 | 5 | कोसल्या . | कौसल्या |
| 53 | 4 | निवर्तया | निवृत्तो |
| ,, | 5 | क्षीम्रु | क्षीपु |
| 56 | 3 | आद्रितया | आद्रियता |
| 57 | 2 | गाधभाज | गाधताभाज |
| 59 | 6 | अनिवार्यंत | न्यवार्यत |
| 61 | 8 | कर्पम | कर्पणम |